# संस्कृतशिक्षामञ्जर्य्याः



## तृतीयो भागः ।

( दशकुमारचरितकथासारः )

पण्डितकुलपतिना
बि, ए, उपाधि-धारिणा
[श्री]मज्जीवानन्द-विद्यासागर-भट्टाचार्य्येण सङ्कलितः ।

तदात्मजेन
पण्डितश्रीमदाशुबोध-विद्याभूषणेन
टीकया परिवर्द्धितः प्रकाशितश्च ।

चतुर्थं संस्करणम् ।




कलिकातामहानगर्य्याम्
वाचस्पत्ययन्त्रे मुद्रितः ।

इं १९३४ । ... ततीत ।—

...र्वं स्वत्वं संरक्षितम् । पादोन...

नाम कश्चित् महाधनो वैश्यवरोऽस्ति। एतस्मात् द्वीपात् गतो मगधराज-मन्त्रिसुतो रत्नोद्भवो नाम तदीयां कन्यां सुवृत्तां नामोपयम्य (घ) श्वशुरेण समाहूतस्तत्रैव तस्थौ। कालेन सा सुवृत्ता गर्भिणी जाता। ततः सहोदर-दर्शनार्थी रत्नोद्भवः श्वशुरमनुनीय अनया भार्यया सुवृत्तया सह प्रवहणम् (ङ) आरुह्य पुष्पपुराभिमुखः प्रतस्थे। दुर्दैवगत्या तत्प्रवहणं समुद्राम्भसि न्यमज्जत्। अहन्तु अस्याः धात्रीभावेन परिकल्पिता तस्मिन्नेव प्रवहणे स्थिता कराभ्यां तां सुवृत्तामुद्वहन्ती फलकमेकमवलम्ब्य कथमपि तीरभूमिमासादयम्। रत्नोद्भवस्य गतिर्न मया विदिता। क्लेशस्य परां काष्ठां गता सुवृत्ता अस्मिन् अटवीमध्ये सुतमसूत। मार्गमन्वेष्टुकामाऽहं प्रसववेदनया विवशायास्तस्याः समीपे बालकं निक्षिप्य गन्तुमयुक्तमिति तं शिशुमनयम्' इति। अत्रान्तरे कश्चित् वन्यो वारणः (च) प्रत्यदृश्यत। तमालोक्य सा भीता तं बालकं निपात्य प्राद्रवत्। (छ) अहमपि सन्निहितलतागुल्ममासाद्य परीक्षमाणः स्थितः। अथ निपतितं बालकं पल्लवकवलमिवाददति गजराजे कश्चित् सिंहः समभ्यधावत्। तदवलोक्य भयाकुलेन गजेन झटिति वियति समुत्पात्य-मानो बालकः अपतत्। दीर्घायुष्यतया (ज) असौ केनचित् वानरेण पक्वफलबुद्ध्या परिगृहीतः पुनः फलेतरदृष्ट्या विततरुस्कन्धमूले (झ) निक्षिप्तोऽभूत्। स च केशरी गजपतिं निहत्य प्रतस्थे। वानरोऽपि क्वापि गतः। अहन्तु तस्मात् लतागुल्माभ्यन्तरात् निर्गत्य बालक-मेनमवनिरुहस्कन्धात् (ञ) अवतार्य्य वनान्तरे तां वनितामप्राप्य गुरवे

---

(घ) उपयम्य विवाहं कृत्वा।

(ङ) प्रवहणम् अर्णवयानम्।

(च) वन्यो वारणः आरण्यगजः।

(छ) प्राद्रवत् पलायामास।

(ज) दीर्घायुष्यतया दीर्घजीवितया।

(झ) फलेतरदृष्ट्या फलादन्यत् किमपि द्रव्यमिति अवलोकनेन। विततेति।— विततः विस्तृतः, यः तरुस्कन्धः वृक्षकाण्डः, तस्य मूले अधोदेशे।

(ञ) अवनिरुहस्कन्धात् वृक्षकाण्डात्।



निवेद्य तदादेशेन भवदन्तिकमनयम्"। राजा तु तदाकर्ण्य रत्नोद्भवः कथमभवदिति चिन्तयन् तन्नन्दनं पुष्पोद्भवनामानं कृत्वा तद्वृत्तान्तं सुश्रुताय व्याख्याय विषादसन्तोषौ अनुभावयन् तदनुजतनयं समर्पितवान्।

---

## अर्थपालोत्पत्तिः।

एकदा कमपि बालकमुत्सङ्गे (क) धृतं वसुमत्या दृष्ट्वा राजा अब्रवीत् "देवि! कुतोऽसौ कथं लब्धः?" इति। सा प्रोवाच "नाथ! अतीतायां रजन्यां काचन दिव्याङ्गना मत्पुरतः (ख) कुमारमिमं समर्प्य निद्रितां मां विबोध्य (ग) सविनयमब्रवीत् 'देवि! त्वन्मन्त्रिणो धर्मपालनन्दनस्य कामपालस्य वल्लभाऽहं यक्षकन्या तारावली नाम नन्दिनी मणिभद्रस्य। धनपतेः (घ) आदेशेन मदात्मजमिमं तव तनयस्य भाविचक्रवर्त्तिनः राजवाहनस्य परिचर्य्याकरणार्थमानीतवत्यस्मि। त्वमिमं संवर्द्धय' इति। मया च विस्मितया सत्कृता असौ यक्षी तदैवान्तर्हिताऽऽसीत्" इति। राजा तदाकर्ण्य सविस्मयं सुमितं मन्त्रिणमाहूय तदीयभ्रातृपुत्रमर्थपालं नाम कृत्वा सर्वं वृत्तान्तं तस्मै समाख्याय प्रादात्।

---

## सोमदत्तोत्पत्तिः।

अन्येद्युः (क) वामदेवशिष्यः कमपि शिशुमानीय राजानमब्रवीत् "देव! तीर्थयात्राप्रसङ्गेन (ख) कावेरीतीरं गतोऽहं बालकमेनमुत्सङ्गे (ग) कृत्वा

---

(क) उत्सङ्गे क्रोडे।

(ख) दिव्याङ्गना स्वर्गीया स्त्री, अपूर्वसुन्दरीत्यर्थः। मत्पुरतः ममाग्रे।

(ग) विबोध्य जागरयित्वा।

(घ) धनपतेः कुबेरस्य।

---

(क) अन्येद्युः अन्यस्मिन् दिवसे, (अन्यशब्दात् एद्युस् इति तद्धितप्रत्ययेन सिद्धम)।

(ख) तीर्थयात्राप्रसङ्गेन तीर्थगमनानुरोधेन।

(ग) उत्सङ्गे क्रोडे।

रुदतीं कामपि स्थविराम् (घ) आलोक्य अवोचं 'स्थविरे ! का त्वम् ? कथं वा रोदिषि ? बालकश्च कस्य नेत्रानन्दकरः ?' इति । सा करयुगेन वाष्पं प्रमृज्याब्रवीत् "ब्रह्मन् ! राजहंसामात्यस्य सितवर्मणः कनीयान् (ङ) सुतः सत्यवर्मा तीर्थयात्राप्रसङ्गेन देशमिममागतः । स कुत्रचित् ग्रामे कालीं नाम कामपि विप्रतनयामुपयम्य (च) तस्या अनपत्यतया तत्कनीयसीं भगिनीं गौरीं नाम परिणीय तस्यामेनं तनयमलभत । काली तु सासूयं (छ) धात्र्या मया सह बालकं केनचित् मिषेण (ज) आनीय अस्यामेव तटिन्याम् (झ) अक्षिपत् । अहन्तु करेणैकेन बालकमुद्धृत्य अपरेण अम्भसि प्लवमाना (ञ) नदीवेगागतस्य कस्यचित् तरोः शाखामालम्ब्य तत्र शिशुं निधाय नदीवेगेन उह्यमाना (ट) तत्तरुस्थितेन कालसर्पेण दष्टाऽस्मि । मदाश्रयभूतोऽयं तरुर्दैवगत्या अस्मिन् देशे तीरमलगत् । विषस्य सुतीक्ष्णतया मयि मृतायाम् अरण्ये कश्चन शरण्यः (ठ) नास्तीति मया रुद्यते' इति ।

ततो विषमविषज्वालया सा वराकी (ड) धरणीतले न्यपतत् । सञ्जातदयोऽहं मन्त्रबलेन विषज्वालामपनेतुमक्षमतया सन्निहितकानने

---

(घ) स्थविरां वृद्धाम् ।

(ङ) कनीयान् कनिष्ठः, ( अयमनयोरेषां वा अतिशयेन युवा अल्पो वा इति युवशब्दात् अल्पशब्दात् वा ईयसु इति तद्धितप्रत्ययेन युवस्थाने अल्पस्थाने वा कनादेशे सिद्धम् ) ।

(च) उपयम्य परिणीय, विवाहं कृत्वा इत्यर्थः ।

(छ) सासूयम् असूयया हिंसया सह वर्त्तमानं यथा तथा, हिंसावशेनेत्यर्थः ।

(ज) मिषेण छलेन ।

(झ) तटिन्यां नद्यां, कावेर्यामित्यर्थः ।

(ञ) प्लवमाना सन्तरन्ती, ( प्लुधातोः शानच् ) ।

(ट) उह्यमाना नीयमाना, ( वहधातोः कर्मणि शानच् ) ।

(ठ) शरण्यः रक्षाकर्त्ता आश्रयदाता वा ।

(ड) वराकी दीना ।

औषधिविशेषमन्विष्य प्रत्यागच्छन् मृतां ताम् आलोकयन्। तदनु अग्निसंस्कारं विधाय व्याकुलचेता बालमेनमगतिम् (ढ) आदाय भवदमात्यनन्दनस्य भवानेव रक्षितेति भवदन्तिकमानीतवानस्मि।"

तदाकर्ण्य राजा सत्यवर्मचिन्तया खिन्नमनाः सुमतये मन्त्रिणे सोमदत्तं नाम तदनुजतनयं समर्पितवान्। सोऽपि सोदरमिव तं मन्यमानो विशेषेणापुषत् (ण)।

---

इत्थं मिलितेन कुमारवर्गेण सह बालकेलिमनुभवन् राजवाहनः क्रमेण चूडोपनयनादिकं संस्कारमवाप (क)। ततः सकललिपिषु सकलदेशभाषासु षडङ्गसहितवेदेषु (ख) काव्यनाटकाख्यानादिषु धर्मशास्त्रज्योतिषतर्कमीमांसादिषु शस्त्रविद्यासु नीतिशास्त्रेषु कलासु मणिमन्त्रौषधादिप्रयोगेषु हस्तितुरगादिविद्यासु अन्येषु च विविधेषु वैषयिकव्यापारेषु तत्तदाचार्येभ्यः सम्यक् वैचक्षण्यं समासाद्य यौवनेन विलसन्तम् अनलसं कुमारनिचयं वीक्ष्य राजा साम्प्रतं शत्रुदुर्द्धर्षोऽहं जात इति मन्यमानः परमानन्दमविन्दत (ग)।

इति प्रथमोच्छ्वासः।

---

(ढ) अगतिम् अनाथं, निराश्रयमित्यर्थः।

(ण) अपुषत् अपालयत्।

---

(क) संस्कारं वेदविहितकर्मणि योग्यतासम्पादकमनुष्ठानविशेषम्, अवाप लेभे।

(ख) षडङ्गसहितवेदेषु "शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चितिः। ज्योतिषामयनञ्चैव षडङ्गो वेद इष्यते॥" इत्युक्तरूपेषु अङ्गषट्कसहितवेदचतुष्टयेषु।

(ग) अविन्दत अलभत।

# अथ द्वितीयोच्छ्वासः ।



एकदा वामदेवः राजानं कुमारनिचयञ्च प्रणतशिरसं गाढमालिङ्ग्य विहिताशीर्मधुरया वाचा प्रावोचत्, "राजन् ! राजपुत्रो राजवाहनः साम्प्रतं समस्तलावण्यं तारुण्यमनुभवति, ससहचरस्यास्य दिग्विजयाय अयं कालः, तदस्य विजयप्रस्थानमङ्गलमाचरतु भवान्" इति । कुमाराश्च सर्वे तद्वाक्यमभिननन्दुः (क) । ततः स राजा तत्साचिव्यमितरेषां (ख) विधाय समुचितमुपदिश्य शुभे मुहूर्त्ते सपरिजनं कुमारं विससर्ज (ग) । राजवाहनः पित्रा कृताशीः शुभशकुनं (घ) विलोकयन् कांश्चित् देशानतिक्रम्य विन्ध्याटवीमविशत्, अपश्यच्च तत्र हेतिहतिकिणाङ्कं (ङ) कालायसकर्कशकायं (च) यज्ञोपवीतमालानुमितविप्रभावं प्रकटितकिरातप्रभावं दुर्दर्शं (छ) कमपि पुरुषम् । तेन च कृतातिथ्यः स राजतनयः समभ्यधात्, "ननु निर्जने घोरेऽस्मिन् कान्तारे किमिति एकाकी भवान् निवसति ? भवत्कण्ठस्थितमेतत् यज्ञोपवीतं विप्रभावमवगमयति, हेतिहतिभिश्च किरातभावम् । तत् कथय को भवान् ? कथमिदम् ?" इति । स पुमान् राजवाहनं महानुभावप्रकृतिं महापुरुषं मन्यमानः तद्वयस्येभ्यस्तन्नामजनने च विदित्वा सविनयमवादीत्, "राजकुमार ! अत्राटव्यां

---

(क) अभिननन्दुः प्रशंसयामासुः ।

(ख) इतरेषाम् अन्येषां कुमाराणां, तत्साचिव्यं राजवाहनस्य मन्त्रित्वम् ।

(ग) विससर्ज दिग्विजयाय प्रेषयामासेत्यर्थः ।

(घ) शुभशकुनं शुभनिमित्तं, मङ्गलज्ञापकलक्षणसमूहमित्यर्थः ।

(ङ) हेतिहतिकिणाङ्कं हेतिभिः अस्त्रसमूहैः, या हतिः आघातः, तस्याः किणः आघातजनितः 'घाँटा' वा 'कड़ा' इति प्रसिद्धः शुष्कव्रणविशेषः, स एव अङ्कः चिह्नविशेषो यस्य तादृशं, पुरुषमित्यस्य विशेषणम् ।

(च) कालायसवत् कृष्णलोह इव, कर्कशः कठिनः, कायः देहो यस्य तादृशम् ।

(छ) दुर्दर्शं भीषणदर्शनम् ।

केचित् स्वाचारं हित्वा पुलिन्दानुचरास्तदन्नभोजिनो (ज) बहवो ब्राह्मणब्रुवाः (झ) प्रतिवसन्ति। तेषां कस्यापि पुत्रो दुश्चरितमात्रपरः मातङ्गो नामास्मि। स च किरातबलेन विचरन् ग्रामं नगरञ्च प्रविश्य तत्रत्यान् धनिनः सदारपुत्रान् वधबन्धनादिना निर्जित्य तेषां सर्वस्वानि अपहरन् निर्दयं व्यचरम्।

कदाचित् क्वचित् विपिने मत्सहचरगणैर्जिघांस्यमानं (ञ) कञ्चित् द्विजमालोक्य सहसा सञ्जातदयोऽहमब्रवं, 'ननु पापाः! न हन्तव्यो ब्राह्मणः' इति। ते मां सक्रोधा निरभर्त्सयन्। अहं तेषां निर्भर्त्सनमसहमानस्तस्य ब्राह्मणस्य रक्षणार्थं चिरं प्रयुध्य तैर्निहतोऽभवम्। ततश्च यमपुरीमेत्य सभामण्डपे रत्नसिंहासनस्थं प्रेतपतिं (ट) दृष्ट्वा प्राणमम्। सोऽपि मामवेक्ष्य चित्रगुप्तमब्रवीत्, 'मन्त्रिन्! पश्य, अयमस्य न मृत्युसमयः। अयञ्च निन्दितचरित्रोऽपि द्विजरक्षार्थं मृतः, इतः परमस्य निष्पापस्य पुण्यार्जने मतिरुदेष्यति। तदयं पापिभिः अनुभूयमानां यातनां विलोक्य पुनः पूर्वशरीरं लभताम्' इति। चित्रगुप्तोऽपि तत्र तत्र निरयवासिनां (ठ) दुर्गतीर्दर्शयित्वा सुबुद्धिमुपदिश्य मामसुञ्चत्। ततस्तदैव पूर्वशरीरमवाप्य तेनैव विप्रेण परिरक्ष्यमाणः क्षणमतिष्ठम्। अथासौ द्विजः कृतज्ञः मह्यं विविधविद्यां शिक्षयित्वा सदाचारमुपदिश्य शिवपूजायां मां निवेश्य प्रायात्। ततः प्रभृति किरातसम्बन्धमुत्सृज्य देवं शङ्करं मनसि स्मरन् अत्रैव निवसामि।

राजपुत्र! भवते किञ्चित् विज्ञापनीयं रहस्यम् (ड) अस्ति, तदा-

---

(ज) पुलिन्दानां म्लेच्छजातिविशेषाणाम्, अनुचराः सहचरा इत्यर्थः। तदन्नभोजिनः तेषां पुलिन्दानाम्, अन्नं भक्तं, भुञ्जन्ति भक्षयन्तीति तादृशाः।

(झ) ब्राह्मणब्रुवाः "गर्भाधानादिसंस्कारैः संस्कृतो ब्रह्मवच्च यः। नाध्यापयति नाधीते स ज्ञेयो ब्राह्मणब्रुवः॥" इत्युक्तलक्षणाः ब्राह्मणाधमाः।

(ञ) जिघांस्यमानं हन्तुमिष्यमाणं, हननोद्यतमित्यर्थः। (सनन्तात् हनधातोः कर्मणि शानच्)।

(ट) प्रेतपतिं यमराजम्। (ठ) निरयवासिनां नरकस्थितानाम्।

(ड) रहस्यं गोपनीयम्।

रास्यताम्" इत्युक्त्वा स मातङ्गः वयस्यगणाद्पेतं तं रहसि (ढ) समभाषत, "नृपनन्दन ! अतीते निशान्ते (ण) गौरीपतिः स्वप्नसन्निहितः निद्रालीढ़-लोचनं मां विबोध्याब्रवीत्, 'मातङ्ग ! दण्डकारण्यमध्यवर्त्तिन्यास्तटिन्यास्तीरदेशे सिद्धसाध्याराध्यस्य (त) स्फटिकलिङ्गस्य पश्चात् पार्वतीपद-पङ्क्तिचिह्नितस्य अश्मनः सविधे (थ) विधिराननमिव किमपि बिलं (द) वर्त्तते। तत् प्रविश्य तत्र निहितं ताम्रशासनं शासनमिव (ध) विधातुः समादाय तदुपदिष्टं विधिं विधाय त्वया पातालाधीश्वरेण भाव्यम्। भवत्साहाय्यकरो राजकुमारः अद्य श्वो (न) वा समागमिष्यति' इति। तदादेशानुगुणमेव (प) भवदागमनं, तत् साहाय्यार्थिनो मम कुरु साहाय्यम्" इति।

अथ राजवाहनः "तथा" इति प्रतिज्ञाय तान् सहचरान् प्रसुप्तान् निशीथे विहाय तेन मातङ्गेन चचाल। ते च कुमाराः प्रातः समुत्थाय राजपुत्रमनवलोकयन्तः विषण्णचेतसः अन्विष्यन्तः समन्तात् यदा न प्रापुस्तदा निश्चितपुनःसङ्गमसङ्केताः परस्परं वियुज्य ययुः। मातङ्गोऽपि तेन लोकवीरेण रक्ष्यमाणः महेश्वरनिर्दिष्टं बिलं निर्भयं प्रविश्य गृहीत-ताम्रशासनः रसातलं गत्वा शासनविधिना होमं विरच्य तस्मिन्नेव ज्वलदग्नौ समन्त्रं स्वदेहमाहुतीकृत्य दिव्यां तनुम् (फ) अवाप।

---

(ढ) रहसि निर्जने। (ण) निशान्ते प्रत्यूषे।

(त) सिद्धेति।—सिद्धाः देवयोनिविशेषाः, साध्या अपि देवयोनिविशेषाः, तैः आराध्यस्य अर्चनीयस्य।

(थ) पार्वत्याः दुर्गायाः, पदपङ्क्तिभिः चरणविन्यासरेखाभिः, चिह्नितस्य अङ्कितस्य, अश्मनः प्रस्तरखण्डस्य, सविधे समीपे।

(द) बिलं गर्त्तम्। (ध) ताम्रशासनं ताम्रफलके लिखितं राजादीनामाज्ञा-विशेषम्। शासनम् आज्ञाम्। (न) श्वः परदिने।

(प) तदिति।—तस्य स्वप्नदृष्टस्य गौरीपतेः शिवस्य, आदेशानुगुणम् आज्ञानु-रूपम्।

(फ) आहुतीकृत्य हुत्वा, अग्नौ प्रक्षिप्येत्यर्थः। दिव्यां तनुम् अलौकिकदेहं, ज्योतिर्मयमपूर्वसुन्दरञ्च शरीरमित्यर्थः।

अथ काचन सर्वावयवसम्पन्ना सर्वालङ्कारालङ्कृता कन्यका समागत्य मणिमेकं समुज्ज्वलमुपायनीकृत्य बद्धाञ्जलिः (ब) तमभाषत, "विप्रवर्य्य! अहमसुरराजनन्दिनी कालिन्दी नाम, मम पिता अस्य लोकस्य शासिता भगवता विष्णुना समरे निहतः। मान्तु पितृशोकसागरपतितामालोक्य कश्चित् सिद्धतापसः सदयमवादीत्, 'वत्से! कश्चिन्मानवो दिव्यदेहधारी तव वल्लभो भूत्वा पातालं पालयिष्यति' इति। तदादेशात् चातकीव घनागमनं (भ) तवागमनं प्रतीक्षमाणा अतिष्ठम्। अद्य मम सुप्रभातं येन त्वं मयाऽद्य प्राप्तः, तदिदानीं मां परिगृह्य रसातललक्ष्मीमनुभव' इति। मातङ्गोऽपि राजपुत्रानुमत्या तां तरुणीं परिणीय रसातलसिंहासनमध्यास्य परमानन्दमलभत।

राजपुत्रस्तु वयस्यगणान् प्रति समुत्सुकः कालिन्दीदत्तं क्षुत्पिपासादिक्लेशहरं मणिं साहाय्यकरणतोषितात् मातङ्गात् समवाप्य कञ्चन पन्थानम् अनुवर्तमानं तं विसृज्य तेनैव बिलपथेन निर्ययौ। तत्र च मित्रगणमप्राप्य भुवं क्रमेण भ्रमन् कस्यचित् महतो ग्रामस्य उपशल्ये आक्रीड़म् (म) एकमासाद्य विश्रामाय तत्र प्रविश्य आन्दोलिकारूढ़ं (य) रमणीसहितम् आप्तजनपरिवृतं कमपि पुरुषमपश्यत्। सोऽपि राजपुत्रं दृष्ट्वा आनन्दविह्वलः "ममैषः स्वामी सोमकुलावतंसो राजवाहनः, महाभाग्यतया सहसा मे दर्शनपथं गतः" इत्यभिधाय आन्दोलिकाया अवतीर्य्य सत्वरमुपेत्य प्रणनाम। राजवाहनश्च प्रत्यभिज्ञाय "कथं स एष मे वयस्यः सोमदत्तः!!" इति व्याहरन् गाढ़मालिलिङ्ग। ततः कस्यचित् पुन्नागतरोः (र) प्रच्छायशीतले तले समुपविश्य सप्रणयमभाषत, "सखे!

---

(ब) उपायनीकृत्य उपहारीकृत्य, उपढौकनं दत्त्वेत्यर्थः। बद्धाञ्जलिः बद्धाञ्जलिः।

(भ) चातकी पक्षिणीविशेषः, घनागमनं मेघोदयं, वारिवर्षणमिति यावत्।

(म) उपशल्ये ग्रामान्ते, ग्रामप्रान्ते इत्यर्थः। ("ग्रामान्त उपशल्यं स्यात्" इत्यमरः)। आक्रीड़म् उद्यानं, नागरिकाणां विहारस्थानमित्यर्थः।

(य) आन्दोलिकारूढ़ं दोलायामधिष्ठितम्।

(र) पुन्नागतरोः नागकेशरवृक्षस्य।

कालमेतावन्तं कथं तिष्ठसि ? तरुणी चेयं का ? कश्चायं परिजनः ?" इति । सोऽपि आनन्दमुकुलिताक्षः सविनयं स्ववृत्तान्तमाख्यातुमुपचक्रमे ।

इति द्वितीयोच्छ्वासः ।

---

# अथ तृतीयोच्छ्वासः ।

## सोमदत्तचरितम् ।

"देव ! भवच्चरणदर्शनार्थी अहं भ्रमन् कस्यामपि वनभूमौ पिपासाकुलः लतावेष्टितं शीतलं नदसलिलं पिबन् समुज्ज्वलं रत्नमेकमासादयम् । आदाय च तत् कियन्तमध्वानं गत्वा प्रखरसूर्य्यकिरणासहिष्णुतया गन्तुमक्षमः किमपि देवतायतनं प्राविशम्, अपश्यञ्च तत्र बहुतनयसमेतं वृद्धं भूसुरम् (क) एकम् । स तु दैन्यकारणं पृष्टो मया साग्रहमवोचत्, 'महाभाग ! सुतान् एतान् मातृहीनान् अनेकैः उपायैः रक्षन् इह कथञ्चित् भैक्ष्यम् आचर्य्य अस्मिन् शिवमन्दिरे वसामि' इति । 'ब्रह्मन् ! एतत्कटकाधिपतिः कस्य देशस्य राजा ? किन्नामधेयः ? कथं वा अत्र आगमनमस्येति कच्चित्(ख)विदितमस्ति ?' इति पुनः पृष्टोऽब्रवीत्, 'सौम्य ! मत्तकालो नाम लाटेश्वरो देशस्य अस्य पालयितुर्वीरकेतोस्तनयां वामलोचनां नाम तरुणीललामभूतां श्रावं श्रावम् अवधूतत्प्रार्थनस्य (ग) पाटलीं नाम नगरीमरौत्सीत् । वीरकेतुस्तु भीतो महदुपायनमिव (घ) तां कन्यां तस्मै प्रादात् । स च तरुणीलाभसन्तुष्टः 'परिणेया निजपुरे एव' इति निश्चित्य गच्छन् निजदेशं मृगयाऽऽदरेण वनेऽस्मिन् शिबिरमकल्प-

---

(क) भूसुरं ब्राह्मणम् । (ख) कच्चित् इति प्रश्नार्थकमव्ययम् ।

(ग) श्रावं श्रावं श्रुत्वा श्रुत्वा, पुनः पुनः श्रुत्वा इत्यर्थः, ( आनन्तर्य्यार्थे णमुल् ) । अवधूता अवज्ञाता, तस्य लाटेश्वरस्य मत्तकालस्य, यद्वा—सा तादृशी, वामलोचनानामतनयाविषयिणीत्यर्थः, प्रार्थना याञ्ञा येन तादृशस्य, वीरकेतोरित्यस्य विशेषणम् ।

(घ) उपायनम् उपहारम् ।

यत्। कन्याऽपसारणार्थं नियुक्तो मानपालो नाम वीरकेतुमन्त्री चतुरङ्ग-बलसमन्वितः खप्रभीरवमानखिन्नमानसोऽन्यत्र रचितशिविरस्तमन्त्र-बिभेद' (ङ) इति।

तदाकर्ण्य 'विप्रोऽसौ बहुतनयः विद्वान् दरिद्रः स्थविरश्च दानयोग्यः' इति तस्मै सकरुणं तत् रत्नं दत्त्वा अध्वश्रमात् तत्र एकदेशे निद्राम् अलभे; ब्राह्मणश्चासौ कुत्रचित् जगाम। क्षणेन च पश्चात् निगड़ित-बाहुयुगलः स विप्रः कशाहतगात्रः बहुनिस्त्रिंशधारिपुरुषैः (च) अनुगम्य-मानोऽभ्येत्य मां 'दस्युः' इति अदर्शयत्। ते च तं परित्यज्य मदुक्तं रत्नावाप्तिप्रकारमनाकर्ण्य मां गाढ़ं नियम्य (छ) रज्जुभिः आनीय कारा-वासम् 'एते तव सखायः' इति निगड़ितान् (ज) कांश्चित् निर्दिशन्तो मामपि निगड़ितचरणमकार्षुः। तान् कारावासिनः उद्दिश्य मयोक्तं, 'ननु पुरुषाः वीर्य्यवन्तः! कथं निर्विशथ (झ) कारावासदुःखम्? यूयं वयस्या इति निर्दिष्टमेतैः किम्?' इति। ते च मामवेक्ष्य चौरवीराः अवोचन्, 'महाभाग! वीरकेतुमन्त्रिणो मानपालस्य किङ्करा वयं, तदाज्ञया लाटेश्वरनिधनाय रात्रौ सुरङ्गद्वारेण तदागारं प्रविश्य तत्र राजाभावेन विषण्णाः बहुधनमपहृत्य महाटवीं प्राविशाम। अपरेद्युश्च अन्वेषिणो राजानुचरा बहवोऽभ्येत्य (ञ) हृतधनचयान् अस्मान् परितः (ट) परिवृत्य दृढ़ं बद्ध्वा निकटमानीय समस्तवस्तुप्रत्यर्पणेऽपि एकस्य अमूल्यरत्नस्याभावेन अस्मद्वधाय इत्थमशृङ्खलयन्' इति।

अथ अहं रत्नभवृत्तान्तं ब्राह्मणाय तद्दानं तेन च आत्मनो दुरवस्थां नाम धाम भ्रमणकारणञ्च सर्वं तेभ्यः सम्भाष्य तैः मैत्रीमकार्षम्। ततो-

---

(ङ) मन्त्रविभेद मन्त्रभेदे तत्परो बभूव, लाटेश्वरस्य सैन्यमध्ये भेदं जनयितुं चेष्टयामासेत्यर्थः।

(च) बहुनिस्त्रिंशधारिपुरुषैः अनेकखड्गधारिजनैः।

(छ) नियम्य बद्ध्वा। (ज) निगड़ितान् शृङ्खलाबद्धान्।

(झ) निर्विशथ भुङ्क्ष्वे, ("निर्वेशो भृतिभोगयोः" इत्यमरः)।

(ञ) अभ्येत्य अभिमुखमागत्य। (ट) परितः चतुर्दिक्षु।

ऽर्द्धरात्रे तेषां मम च शृङ्खलबन्धनं निर्भिद्य तैः अनुगम्यमानो निद्रितस्य द्वाःस्थगणस्य (ठ) अस्त्रजालमादाय पुररक्षकान् पुरतोऽभिमुखागतान् पराक्रमेणाभिद्राव्य (ड) मानपालशिविरं प्राविशम्। मानपालो निज-किङ्करेभ्यः मम वृत्तान्तं तात्कालिकविक्रमञ्च निशम्य मामार्चयत्।

अन्येद्युः मत्तकालेन प्रेषिताः कतिपये मानपालमुपेत्य अवोचन्, 'मन्त्रिन्! मदीयराजमन्दिरे सुरङ्गया बहुधनमपहृत्य चौरा भवत्कटकं (ढ) प्राविशन्; तान् अर्पय, नो चेत् महान् अनर्थः सम्भविष्यति' इति। तदाकर्ण्य कोपारुणनयनो मानपालो 'लाटपतिः कः?' इति तान् निरभर्त्सयत्। तदनु ते प्रत्येत्य मत्तकालाय सर्वमकथयन्। स च कुपितो भुजवीर्य्यदर्पेण अल्पसैन्यसमेत एव योद्धुमभ्यगात्। पूर्वमेव कृतरणनिश्चयो मानी मानपालः सन्नद्धयोधो (ण) निःशङ्कं निरगात्। अहमपि सबहुमानं मन्त्रिदत्तातिबहुलतुरङ्गमोपेतं चतुरसारथिं रथं दृढतरं कवचम् अनुरूपं चापं विविधबाणपूर्णौ तूणद्वयम् अन्यानि च विविधानि आयुधानि गृहीत्वा युद्धसन्नद्धो मन्त्रिणमन्वगाम्। इत्थं प्रवृत्ते शस्त्रसम्पाते अरातीन् अवलीलया प्रहरन् मत्तकालमभ्येत्य निशितशरेण तच्छिरःकर्त्तनमकार्षम्। तस्मिंश्च निपतिते पलायितेषु शेषसैनिकेषु मन्त्री मम अनेकसंविधां सम्भावनाम् (त) अकार्षीत्।

अथ मानपालप्रेषितात् तदनुचरात् सर्वमुदन्तजातमाकर्ण्य राजा परमप्रीतमनाः समभ्यागतो मत्पराक्रमेण विस्मयमानः समहोत्सवम् अमात्यबान्धवानुमत्या शुभेऽहनि निजतनयां मह्यमदात्। ततो यौवराज्याभिषिक्तोऽहमनुदिनं राजानमनुरञ्जयन् भवद्विरहवेदनाकुलमानसः

---

(ठ) द्वाःस्थगणस्य द्वारि कारागारे, तिष्ठन्ति वर्त्तन्ते ये ते द्वाःस्थाः, तेषां गणस्य समूहस्य, द्वारपालसमूहस्य।

(ड) अभिद्राव्य वेगेनाक्रम्य, पराजित्य इत्यर्थः।

(ढ) भवत्कटकं तव सैन्यं, तव स्कन्धावारं वा, सेनासन्निवेशस्थानमित्यर्थः।

(ण) सन्नद्धेति।—सन्नद्धाः वर्मिताः, योधाः सैनिकाः यस्य तादृशः, वर्मपरिधानेन अवद्धमैद्य इत्यर्थः।

(त) अनेकसंविधां विविधप्रकारां, सम्भावनां समादरम्।

सिद्धादेशेन (थ) सुहृज्जनावलोकनफलप्रदेशं (द) महाकालनिवासिनः शङ्करस्य आराधनाय अद्य कान्तासमेतः समागतोऽस्मि। भक्तवत्सलस्य अस्य देवस्य प्रसादेन भवच्चरणारविन्दसन्दर्शनसुखमद्य लब्धम्” इति।

तदाकर्ण्य अभिनन्दिततत्पराक्रमः राजवाहनस्तस्य निरपराधक्लेशप्रदं दैवमुपालभ्य तस्मै (ध) क्रमेण आत्मवृत्तान्तमकथयत्। अस्मिन्नेव अवसरे सहसा पुरतः समुपस्थितं पुष्पोद्भवं विलोक्य तं कृताञ्जलिं गाढ़मालिङ्ग्य “सोमदत्त! अयं स मे पुष्पोद्भवः” इति सानन्दं तं दर्शयामास। तौ च चिरविरहदुःखं विहाय अन्योऽन्यालिङ्गनसुखमन्वभूताम्। ततस्तस्यैव तरोश्छायायामुपविश्य राजपुत्रोऽब्रवीत्, “वयस्य! भूसुरकार्य्यं चिकीर्षुरहं ‘मित्रगणो विदितार्थः सर्वथा अन्तरायं (न) करिष्यति’ इति निद्रितान् भवतः परित्यज्य निरगाम्। तदनु प्रबुद्धो वयस्यवर्गः किमिति निश्चित्य मदन्वेषणाय कुत्र गतवान्? भवांश्च एकाकी क्व गतः?” इति। सोऽपि कृताञ्जलिः सविनयमवादीत्।

इति तृतीयोच्छ्वासः।

---

## अथ चतुर्थोच्छ्वासः।

---

## पुष्पोद्भवचरितम्।

“देव! देवेन गन्तव्यं देशं निर्ज्ञातुमशक्नुवाने (क) मित्रगणे

---

(थ) सिद्धादेशेन योगसिद्धस्य कस्यचित् महात्मनः अनुज्ञया।

(द) सुहृदिति।—सुहृज्जनानां भवदादीनां बन्धुगणानाम्, अवलोकनमेव साक्षात्प्राप्तिरेव, फलं परिणामः, यस्य प्रदेशस्य यत्प्रदेशागमनस्य तादृशं प्रदेशं स्थानमित्यर्थः।

(ध) उपालभ्य निन्दयित्वा। तस्मै सोमदत्ताय।

(न) अन्तरायं विघ्नं, गमने प्रतिबन्धमित्यर्थः।

---

(क) अशक्नुवाने असमर्थे। (स्वादिगणीयशकधातोः शानच्)।

देवान्वेषणाय इतस्ततः प्रद्रुते (ख) अहमपि तदेककर्मा महीमटन् कदाचित् प्रखरसौरकिरणोत्तापितशिराः कस्यचित् गिरितटरुहस्य (ग) तरोः प्रच्छायशीतले तले क्षणम् उपाविशम्। सहसा मध्याह्नसमये मत्पुरतः भानुप्रच्छायां निरीक्ष्य उन्मुखः पतन्तं कमपि पुरुषमम्बरतलात् अन्तराले एव सञ्जातदयोऽवलम्ब्य शनैः अवनीतले स्थापयित्वा दूरापातवीतसंज्ञं (घ) तं शिशिरोपचारेण विबोध्य (ङ) शोकावेगविगलद्बाष्पं कारणमपृच्छम्। सोऽपि कराभ्यामश्रूणि प्रमृज्य अभाषत, 'सौम्य! मगधेश्वरामात्यस्य पद्मोद्भवस्य आत्मजो रत्नोद्भवो नामाहं वाणिज्येन कालयवनद्वीपमुपेत्य तत्र कामपि वणिक्तनयां परिणीय तया सह प्रत्यागच्छन् अम्बुधौ तीरस्य अनतिदूरे एव प्रवहणस्य मग्नतया सर्वेषु निमग्नेषु कथमपि दैवानुकूल्येन तीरमवाप्य कान्ताविरहदुःखार्णवे प्लवमानः (च) कस्यापि सिद्धतापसस्यादेशात् षोड़शवत्सरान् कथञ्चित् नीत्वा दुरवस्थापारम् (छ) अनवेक्षमाणो गिरिपतनम् (ज) अकार्षम्' इति।

अस्मिन्नेव अवसरे किमपि नारीकूजितम् (झ) अश्रावि, 'न खलु समुचितमिदं यत् सिद्धादिष्टे पतितनयमिलने विरहासहिष्णुतया अग्निप्रवेशः' इति। तदाकर्ण्य मनोविदितजनकभावं (ञ) तमवादिषं, 'तात!

---

(ख) प्रद्रुते प्रस्थिते।

(ग) गिरितटे पर्वतप्रस्थे, रोहति सञ्जायते इति तादृशस्य पार्वतीयस्य इत्यर्थः।

(घ) दूरेति।—दूरात् बहु ऊर्ध्वप्रदेशात्, आपातेन आपतनेन, वीता अपगता, संज्ञा चेतना यस्य तादृशम् अत्युच्चप्रदेशात् पतनेन मूर्च्छितमित्यर्थः।

(ङ) विबोध्य प्रबोध्य, संज्ञां जनयित्वा इत्यर्थः।

(च) प्लवमानः सन्तरन्।

(छ) दुरवस्थायाः दुर्दशायाः, पारम् अन्तं, दुर्दशायाः चरमसीमानम्।

(ज) गिरेः पर्वतात्, पर्वतशिखरादित्यर्थः, पतनम् आत्मपातनमित्यर्थः।

(झ) नारीकूजितं स्त्रीकण्ठोच्चारितं शब्दम्।

(ञ) मन इति।—मनसा चेतसा, विदितं ज्ञातं, जनकभावं पितृत्वं यस्य तादृशम्, अयमेव मे जनक इति निश्चित्य इत्यर्थः।

भवति विज्ञापनीयानि बहूनि सन्ति; भवतु, पश्चात् तत् सम्भवति, अधुना नारीकूजितमनुपेक्षणीयं, तत् क्षणमात्रमत्र भवता स्थीयताम्' इति। तदनु सोऽहं त्वरया किञ्चित् अन्तरं गत्वा पुरतो ज्वलदग्नि-प्रवेशोद्यतां कामपि वनितामवलोक्य ससम्भ्रमम् अनलात् अपनीय कूजन्त्या (ट) वृद्धया सह मत्पितुरन्तिकमभिगमय्य (ठ) स्थविरामब्रवं, 'वृद्धे! भवत्यौ कुतस्त्ये? (ड) कथमत्र कान्तारे केन निमित्तेन दुरवस्था अनुभूयते?' इति। सा सगद्गदम् अवादीत्, 'पुत्र! कालयवनद्वीपे कालगुप्तनाम्नो वणिजः कन्यैषा सुवृत्ता नाम रत्नोद्भवेन निजकान्तेन आगच्छन्ती जलधौ मग्ने प्रवहणे निजधात्र्या मया सह फलकमेकमवलम्ब्य दैवयोगेन कूलमुत्तीर्णा आसन्नप्रसववेदना कस्याञ्चिदटव्यां सुतमसूत। मम तु मन्दभाग्यतया बाले वनमातङ्गेन गृहीते मदेकाश्रया परिभ्रमन्ती 'षोडशवर्षानन्तरं भर्त्तृपुत्रसङ्गमो भविता' इति सिद्धवाक्यप्रत्ययात् (ढ) एकस्मिन् पुण्याश्रमे तावन्तं समयं नीत्वा शोकमपारं सोढुमक्षमा साम्प्रतं समुज्ज्वलिते हुताशने शरीरमाहुतीकर्त्तुमुद्यता' इति। तदाकर्ण्य स्वां जननीं ज्ञात्वा दण्डवत् प्रणम्य तस्यै मद्वृत्तान्तमखिलमाख्याय धात्रीभाषणफुल्लवदनं विस्मयविकसिताक्षं जनकमदर्शयम्। पितरौ तु साभिज्ञानम् अन्योऽन्यं (ण) विदित्वा मुदितान्तरात्मानौ विनीतं माम् आनन्दवाष्पेण अभिषिच्य गाढमाश्लिष्य शिरसि उपाघ्राय कस्याञ्चित् महीरुहच्छायायामुपाविशताम्। 'कथं वर्त्तते महीपतिः राजहंसः?' इति

---

(ट) कूजन्त्या पूर्वोक्तरूपं शब्दं कुर्वत्या।

(ठ) अभिगमय्य प्रापय्य, आनयित्वा इत्यर्थः, (अभिपूर्वकात् णिजन्तगमधातोः ल्यप्)।

(ड) कुतस्त्ये? कस्मात् आगते?।

(ढ) सिद्धेति।—सिद्धस्य योगसिद्धस्य पुरुषस्य, वाक्ये "षोडशवर्षानन्तरं स्वामिपुत्राभ्यां सह मिलनं भविष्यति" इति वचने, प्रत्ययात् विश्वासात्।

(ण) साभिज्ञानम् अभिज्ञायते अनेन इति अभिज्ञानं तेन—अयमेव मत्पतिः इयमेव मत्पत्नी इति, निश्चयकारकशरीरस्थासाधारणचिह्नविशेषेण सह वर्त्तमानं यथा तथा। अन्योऽन्यं परस्परम्।

सकलगुणनिलयेन बन्धुपालनाम्ना चन्द्रपालपिता नीयमानो मालवनाथ-दर्शनं विधाय तदनुमत्या गूढवसतिमकार्षम् । ततः काननेषु भवदन्वेषणोद्युक्तं मां परममित्रं बन्धुपालो निशम्य अवदत्, 'मित्र ! अखिलां धरित्रीमन्वेष्टुमक्षमो भवान् साम्प्रतं निरुद्वेगेन अत्र तिष्ठतु, भवत्प्रभोरवलोकनाय शुभशकुनं निरीक्ष्य पश्चात् कथयिष्यामि' इति । अहञ्च तद्वचनमनुसरन् तदन्तिके एव अतिष्ठम् ।

कदाचित् बालचन्द्रिकां नाम कामपि वणिक्कन्यां नयनचन्द्रिकां निरीक्ष्य तल्लावण्यमुग्धचित्तः मदनशरशरव्यताम् (य) अयासिषम् । साऽपि माम् अवलोक्य मदवस्थामेव नीता मकरकेतनेन । अहन्तु तस्याः सुखसङ्गमोपायं चिन्तयन् परेद्युर्बन्धुपालेन शकुनैः भवद्गतिं प्रेक्षिष्यमाणेन सह पुरप्रान्तविहारवनमुपेत्य शकुनवचनानि (र) शृण्वन् स्थितः । तत्र च तामेव मत्प्राणेश्वरीं दीनवदनां बालचन्द्रिकामागतां वीक्ष्य तदीयमुखारविन्दे विषादं मदनावेशजनितं विभाव्य तदन्तिकमेत्य अवादिषं, 'सुन्दरि ! कथं ते मुखारविन्दे दैन्यलक्षणम् ?' । सा रहसि सञ्जातविस्रम्भतया (ल) विहाय लज्जाभये शनैः अवादीत् ।

'महाभाग ! मानसारो मालवधीशो वार्द्धक्यात् निजनन्दनं दर्पसारम् उज्जयिन्याम् अभ्यषिञ्चत् । स च सप्तसागरपरिखां महीं पालयिष्यन् निजपितृष्वस्रेयौ (व) चण्डवर्मदारुवर्माणौ राज्यरक्षणे नियुज्य तपश्चरितुं कैलासगिरिमगमत् । राज्यं सर्वमसपत्नं (श) शासति चण्डवर्मणि

(य) मदनशरस्य कामबाणस्य, शरव्यतां लक्ष्यतां, वेध्यविषयीभूततामित्यर्थः ।

(र) शकुनानां पक्षिणां, वचनानि कूजनानि ; एतेन बन्धुपालस्य पक्षिभाषाभिज्ञत्वं सूच्यते ।

(ल) सञ्जातविस्रम्भतया उत्पन्नविश्वासतया, मां प्रति विश्वासादित्यर्थः, उत्पन्नप्रणयतया इति वा, मां प्रति अनुरागवशादित्यर्थः । ("विस्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च" इति मेदिनी ) ।

(व) निजस्य आत्मनः, पितृष्वसुः पितुर्भगिन्याः अपत्यं पुमान् तौ निजपितृष्वस्रेयौ पितुर्भगिनीपुत्रौ ।

(श) असपत्नं शत्रुशून्यम् ।

दारुवर्मा मातुलाग्रजन्मनः शासनमतिक्रम्य दुर्वृत्तपरो मन्मथसदृशस्य भवतो लावण्यायत्तचित्तां माम् एकदा विलोक्य बलात्कर्तुम् उद्युङ्क्ते, तच्चिन्तया मे दैन्यम्' इति। अहन्तु तस्या मयि आसक्तिं तदन्तरायञ्च तं निशम्य ताम् अश्रुमुखीम् आश्वास्य प्रावोचं, 'प्रिये! भवदभिलाषिणं दुरात्मानम् एनं निहन्तुं मयाऽयम् उपायश्चिन्त्यते, यथा 'यक्षः कश्चित् अधिष्ठाय बालचन्द्रिकां निवसति। यः कश्चित् साहसिकः सम्बन्धयोग्यः तं यक्षं रतिमन्दिरे निर्जित्य तया एकसखीसमेतया मृगाक्ष्या संलापसुखम् अनुभूय कुशली निर्गच्छेत् तेन सा विवाह्या' इति सिद्धेन एकेन उक्तमिति युष्मद्बान्धवैः पुरजनस्य पुरतः पुनः पुनः कथनीयम्। तदनु दारुवर्मा तं प्रवादम् आकर्ण्य यदि भिया निवर्तते तदा भद्रं, (प) यदि च भुजवीर्य-दर्पेण तथा अङ्गीकरिष्यति तदा युष्मत्परिजनैः इत्थं वाच्यं, 'महाभाग! दर्पसारनृपामात्यस्य तव अस्मिन् क्षुद्रे निकेते साहसकरणमनुचितम्। पौरजनसमक्षं स्वमन्दिरं नीत्वा अनया सह क्रीडन् यदि कुशली स्याः तदा परिणीय ततो मनोरथान् निर्विश' (स) इति। स यदि तथा अङ्गीकुर्यात् तदा त्वं सखीवेशधारिणा मया सह तस्य मन्दिरं गच्छ, ततो मया निर्जने तस्मिन् निकेतने मुष्टिजानुपादाघातैः तं तरसा (ह) निहत्य पुनरपि तेनैव वेशेन भवतीं निःशङ्कं स्वगृहं नेष्यामि। त्वञ्च विगतभयलज्जा मातापितृसहोदराणां पुरतः आवयोः प्रेमातिशयम् आख्याय सर्वथा मत्परिणयाय तान् अनुनयेः, तेऽपि कुलसम्पन्नलावण्य-शालिने यूने मह्यं त्वाम् अवश्यं दास्यन्ति। तदा एवं तेषाम् आख्याय दारुवर्मणो मरणोपायं तेषामुत्तरं मह्यम् आवेदनीयम्' इति।

सा च किञ्चिदुत्फुल्लवदना 'सुभग! त्वयोक्तं सर्वमाचरिष्यामि' इति कथयित्वा मामसकृत् विवृत्तवदना (क) विलोकयन्ती मन्दमन्दम्

---

(प) भद्रं शुभम्।

(स) निर्विश उपभुङ्क्ष्व। ("निर्वेशो भृतिभोगयोः" इत्यमरः)।

(ह) तरसा वेगेन, बलेनेत्यर्थः।

(क) असकृत् वारंवारम्। विवृत्तवदना पराङ्मुखी।

अगारम् अगात्। अहमपि बन्धुपालशकुनज्ञात् (ख) लिङ्गाद्दिनानन्तरमेव भवत्सङ्गः सम्भविता' इति अश्रावम्। अत्रान्तरे दारुवर्मणा रिरंसुना (ग) रतिमन्दिरे समाहूता बालचन्द्रिका तं गमिष्यतीति दूतिकां मत्समीपम् अभिप्रेषितवती। अहमपि सखीवेशम् आस्थाय (घ) तया वल्लभया सह तदागारम् अगच्छम्। नगरप्रचारितां यक्षकथां परीक्षमाणो नागर-जनोऽपि दारुवर्मणः प्रतीहारभूमिम् (ङ) अगमत्। विवेकशून्य-मतिरसौ रागातिरेकेण रत्नपर्य्यङ्के तरुणीं नीत्वा तस्यै मह्यञ्च मनोरमस्त्री-वेशाय सकर्पूरताम्बूलादिकं दत्त्वा मुहूर्त्तद्वयं हास्यकौतुकैः संलपन् अतिष्ठत्। ततो यदा रागान्धः सुमुख्या आलिङ्गने मतिम् अकरोत् तदा अहं रोषारुणाक्षः पर्य्यङ्कतलात् निःशङ्कः एनं निपात्य मुष्टिजानुपाद-प्रहारैः न्यहनम्। ततो भयकम्पितां कान्तां समाश्वास्य मन्दिराङ्गणमुपेतः साध्वसकम्पित इव उच्चैः अकूजं, (च) 'हा! बालचन्द्रिकाऽधिष्ठितेन घोरेण यक्षेण दारुवर्मा सहसा निहन्यते, समागत्य पश्यत' इति। तदाकर्ण्य मिलिता जनाः 'हा! किमेतत्!! बालचन्द्रिकामधिष्ठितं यक्षं जानन्नपि दारुवर्मा रागान्धः कथं तामकामयत? तदसौ स्वेनैव कर्मणा निहतः, किं तस्य अनुशोचनेन?' इति वदन्तः प्राविशन्। तस्मिंश्च तुमुले कोलाहले तया सह नैपुण्येन सहसा निर्गतो निजावासमगाम्। ततो गतेषु कतिपयेषु दिवसेषु पौरजनसमक्षं तां विवाह्य यथाभिलषितं सुखमन्वभवम्; अभूवञ्च बन्धुपालशकुननिर्दिष्टे दिवसेऽस्मिन् पुराद्बहिर्वर्त्तमानो भवच्चरणारविन्ददर्शनसुखभाजनम्"।

---

(ख) बन्धुपाल एव शकुनज्ञः शुभाशुभलक्षणाभिज्ञः पक्षिभाषाभिज्ञो वा तस्मात्।

(ग) रिरंसुना रन्तुमिच्छुना, रमणेच्छुनेत्यर्थः। (रमधातोः सनन्तात् उः)।

(घ) आस्थाय धृत्वा इत्यर्थः।

(ङ) प्रतीहारेति।—प्रतीहारस्य द्वाररक्षकस्य, भूमिम् अवस्थितिस्थानं, भवन-प्रवेशार्थं दौवारिकाधिष्ठितप्रधानद्वारे इत्यर्थः।

(च) साध्वसकम्पित इव सभयकम्पित इव, भयजनितकम्पनस्य भावं दर्शयित्वा इत्यर्थः, न तु यथार्थं भयं, न वा यथार्थः कम्प इति भावः। उच्चैः अकूजं चीत्काररवम्, उच्चैश्चीत्काररवमकरवमित्यर्थः।

एवं मित्रवृत्तान्तं निशम्य प्रफुल्लवदनो राजसूनुः स्वस्य सोमदत्तस्य च वृत्तमस्मै समाख्याय सोमदत्तं "महाकालेश्वराराधनानन्तरं भवद्वल्लभां स्वं निकेतनं प्रापय्य आगच्छ" इति समादिश्य पुष्पोद्भवेन सह अवन्तिपुरम् अविशत्। तत्र "अयं मम स्वामिकुमारः" इति बन्धुपालप्रमुखाय बन्धुजनाय कथयित्वा तेन सादरं बहुविधां सपर्य्यां (छ) कारयन् "सकलकलाकुशलो द्विजवर एषः" इति प्रख्यापयन् पुष्पोद्भवः स्वमन्दिरे एनं पर्य्यचरत्।

इति चतुर्थोच्छ्वासः।

# अथ पञ्चमोच्छ्वासः।

## राजवाहनचरितम्।

एकदा वसन्तोदाररमणीये काले अवन्तिसुन्दरी नाम मानसार-नन्दिनी वयस्यया बालचन्द्रिकया सह नगरोपान्ते रम्योद्याने पौर-विलासिनीजनपरिवृता मनोभवम् (क) अर्चयितुमगात्। तत्र रतिमिव अवन्तिसुन्दरीं दिदृक्षुः काम इव वसन्तसहायः पुष्पोद्भवानुचरो राजवाहनः समाजगाम। सा तु अवन्तिसुन्दरी तं क्रमेण अन्तिकम् आयान्तं स्वेनैव आराध्यमानं वाञ्छितप्रदानार्थम् आविर्भूतं मूर्त्तिमन्तम् अनङ्गमिव समालोक्य मन्दमारुतान्दोलिता लतेव मदनाविशवती चकम्पे; तस्थौ च तत्समक्षं लज्जमाना सखीजनान्तरिता अपाङ्गवीक्षणेन (ख) तमव-

(छ) सपर्य्यां पूजां, परिचर्य्यामित्यर्थः।

(क) मनोभवं कन्दर्पम्।

(ख) सखीजनेन सहचर्य्या बालचन्द्रिकया, अन्तरिता आच्छादिता, सख्या अन्तराले अवस्थितेत्यर्थः। अपाङ्गवीक्षणेन कटाक्षेण। ("कटाक्षोऽपाङ्गदर्शने" इत्यमरः)।

लोकयन्ती। बालचन्द्रिका तु तयोः अन्योऽन्यरागवृत्तिम् (ग) अनुभवन्ती कान्तासमाजसन्निधौ (घ) राजनन्दनोदन्तं सम्यक् आख्यातुमयुक्तमिति लोकसाधारणैर्वचनैः अभाषत, "भर्तृदारिके ! (ङ) अयं सकलकलानिपुणो देवतासान्निध्यकरण आह्वननिपुणो (च) द्विजकुमारो मणिमन्त्रौषधचतुरः परिचरणीयो (छ) भवत्या" इति। तदाकर्ण्य सा अभिनन्दिततद्वचना जितमारं (ज) समुचितासनासीनं कृत्वा सखीहस्तेन गन्धमाल्यादिना समुपाचरत्।

राजवाहनोऽचिन्तयत्, "नूनमेषा पूर्वजन्मनि मे जाया यज्ञवती, नो चेत् कथमेतस्याम् एवंविधोऽनुरागो मे वर्त्तते ? शापावसानसमये तपोनिधिदत्तं जातिस्मरत्वम् (झ) आवयोः समानं, तत् यावत् विशेषसूचकैर्वाक्यैः अस्याः स्मरणमुत्पादयामि"। तस्मिन्नेव समये कोऽपि राजहंसः केलिविधित्सया तदुपकण्ठं (ञ) अगमत्। समुत्सुकया राजनन्दिन्या मरालग्रहणे नियुक्तां बालचन्द्रिकामालोक्य "समुचितो वचनावसर एषः" इति राजवाहनः सविलासमालपत्, "सखि ! पुरा शाम्बो नाम कश्चित् नृपतिः कान्तया सह विहारार्थं सरोवरमेत्य तत्र निद्राधीनं राजहंसं शनैर्गृहीत्वा बिसगुणेन (ट) तस्य चरणयुगलं निगडयित्वा कान्तामुखं विलोकयन् मन्दस्मितमवादीत्, 'प्रिये ! मया बद्धो मरालः शान्तो मुनिरिव वर्त्तते,

(ग) अन्योऽन्यरागवृत्तिं परस्परानुरागव्यापारम्।

(घ) कान्तासमाजसन्निधौ महिलासङ्घसमीपे।

(ङ) भर्तृदारिके ! प्रभुनन्दिनि ! राजकुमारि ! इत्यर्थः। ("राजा भट्टारको देवस्तत्सुता भर्तृदारिका" इत्यमरः)।

(च) देवतानां सन्निध्यं सामीप्यं, क्रियते अनेनेति तादृशः, मन्त्रादिप्रभावेण देवतानामाविर्भावकारकः इत्यर्थः। आह्वननिपुणः युद्धकुशलः।

(छ) मणीति।—मणिषु विविधरत्नानां सदसत्परीक्षासु, मन्त्रेषु मन्त्रप्रयोगेषु, औषधेषु औषधप्रयोगेषु च, चतुरः दक्षः। परिचरणीयः सेवनीयः।

(ज) जितमारं पराभूतकन्दर्पं, सौन्दर्य्येण कामजयिनमित्यर्थः।

(झ) जातिस्मरत्वं जन्मान्तरीणवृत्तान्ताभिज्ञत्वम्।

(ञ) तदिति।—तस्याः अवन्तीसुन्दर्य्याः, उपकण्ठं समीपम्।

(ट) बिसगुणेन मृणालतन्तुना।

तत् स्वेच्छया अनेन गम्यताम्' इति। तथोक्ते स राजहंसः शाम्बम् अशपत्, 'राजन्! यदस्मिन् पद्मे अनुष्ठानपरायणतया परमानन्देन तिष्ठन्तं नैष्ठिकं (ठ) मामकारणं राज्यगर्वेण अवमानितवानसि, तदेतेन पातकेन रमणीविरहसन्तापमनुभव' इति। शाम्बस्तु घोरमशनिपातमिव जीवितेश्वरीविरहमसहिष्णुर्भूतलनिहितशिरास्तं सविनयम् अभाषत, 'भगवन्! अज्ञानतया मया कृतमेतत् क्षमस्व' इति। स तु करुणार्द्रचेताः प्रावोचत्, 'राजन्! जन्मनि अस्मिन् मा ते शापफलभोगोऽस्तु, मद्वचनस्य अमोघतया भाविनि जनने देहान्तरं गताया अस्या रसेन रमणो (ड) भूत्वा मुहूर्तद्वयं मञ्जरीयुगलबन्धनेन मासद्वयं शृङ्खलनिगडितचरणो रमणीवियोगविषादम् अनुभूय तदनु दीर्घकालं कान्तयाऽनया सह राज्यसुखमवाप्स्यसि' इति। ततश्च स भूशमनुनीतस्तयोर्जातिस्मरत्वमपि अन्वग्रहीत्। तस्मात् मरालबन्धनं त्वया न करणीयम्" इति।

साऽपि राजबाला तद्वचनाकर्णनाभिज्ञातस्वपुरातनजननवृत्तान्ता "नूनमयं मत्प्राणनाथः" इति मनसा जानती रागफुल्लमानसा (ढ) समन्दहासमभाषत, "सौम्य! पुरा शाम्बो यज्ञवतीसन्देशपरिपालनाय (ण) तथाविधं हंसं बबन्ध, तथा हि, लोके विद्वांसोऽपि दाक्षिण्येन (त) अकार्य्यं कुर्वन्ति" इति।

---

(ठ) अनुष्ठानेति।—अनुष्ठानं समाधिविधानं, परमात्मनि चित्तवृत्तिसन्निवेश इत्यर्थः, तत्परायणतया तदासक्ततया, हंसरूपं धृत्वा कमलवने अवस्थाय योगानुष्ठानपरतन्त्रतयेत्यर्थः; "अनुष्ठानपरायणतया विजिगीषयेत्यर्थः" इति केचित्। नैष्ठिकं यावज्जीवब्रह्मचारिणम्।

(ड) अमोघतया अव्यर्थतया। भाविनि जनने भविष्यज्जन्मनि, जन्मान्तरे इत्यर्थः। देहान्तरं गतायाः अन्यशरीरं प्राप्तायाः, अस्याः भवत्प्रियस्याः यज्ञवत्याः, रसेन अनुरागेण, रमणः रतिदायकः, भर्त्ता इत्यर्थः।

(ढ) रागेति।—रागेण अनुरागेण, फुल्लं प्रहृष्टं, मानसं मनो यस्यास्तादृशी।

(ण) यज्ञवतीति।—यज्ञवत्याः तन्नाम्न्या निजमहिष्याः, सन्देशः वचनं, प्रार्थनावाक्यमित्यर्थः, तस्य परिपालनाय परिरक्षणाय।

(त) दाक्षिण्येन औदार्य्येण, दक्षिणनायकत्वेनेति वा, प्रियतमायाः प्रीतिसम्पादनेच्छया इत्यर्थः।

कन्याकुमारी इत्थम् अन्योऽन्यपुरातनजननामधेये परस्परज्ञानाय साभिज्ञानमुक्त्वा मनोजरागाविष्टे तौ भृशमानन्दमन्वभूताम्। तस्मिन्नेवावसरे मालवेन्द्रमहिषी सपरिजना दुहितुः केलिदिदृक्षया तमुद्देशमाजगाम। बालचन्द्रिका तामवलोक्य रहस्यनिर्भेदभिया हस्तसंज्ञया (थ) पुष्पोद्भवसेव्यमानं राजवाहनं वृक्षवाटिकान्तरितम् (द) अकार्षीत्। सा तु राजमहिषी क्षणं दुहितुः क्रीड़ाकौतुकमालोक्य निजागारगमनाय समुद्यता अभवत्। राजकुमारी कथमपि (ध) मातरमनुगच्छन्ती "राजहंसकुलतिलक! केलिवाञ्छया मदन्तिकमायातं भवन्तमकाण्डे एव (न) समुत्सृज्य नोचितमपि जनन्यनुगमनं क्रियते, तदनेन भवन्मनो मा अन्यथा भूत्" इति मरालमित्र कुमारम् उद्दिश्य समुचितमालपन्ती पुनः पुनः परिवृत्तानना दीननयना स्वमन्दिरमयासीत्। तत्र हृदयवल्लभकथाप्रसङ्गे बालचन्द्रिकया कथिततदन्वयनामधेया (प) मन्मथशरविद्धमानसा विरहवेदनया दिने दिने बहुलपक्षशशिकला इव क्षामक्षामा (फ) आहारादिसर्वव्यापारवर्जिता रहस्यमन्दिरे मलयजरसक्षालितपल्लवकुसुमकल्पिततल्पमालायत्तदेहा (ब) तस्थौ। वयस्यागणास्तां तदवस्थाम् आलोक्य

---

(थ) रहस्यनिर्भेदभिया गोपनीयविषयस्य प्रकाशाशङ्कया। हस्तसंज्ञया हस्तसङ्केतेन।

(द) वृक्षवाटिकान्तरितम् उपवनस्थवृक्षसमूहान्तराले गोपायितमित्यर्थः।

(ध) कथमपि अतिक्लेशेनेत्यर्थः, अत्यन्तानिच्छयेति यावत्।

(न) अकाण्डे एव अनवसरे एव, अनुपयुक्तसमये एवेत्यर्थः।

(प) कथितेति।—कथिते उक्ते, तस्य राजवाहनस्य, अन्वयनामधेये कुलनामनी यस्यास्तादृशी।

(फ) बहुलेति।—बहुलपक्षे कृष्णपक्षे, या शशिकला चन्द्रकला सा इव। क्षामक्षामा अतिशयेन कृशा।

(ब) रहस्यमन्दिरे निर्जनगृहे। मलयजेति।—मलयजरसेन घृष्टश्वेतचन्दनेन, क्षालिते धौते, विलिप्ते इत्यर्थः, ये पल्लवकुसुमे नवकिशलयं पुष्पञ्च, ताभ्यां कल्पितं विरचितं, यत् तल्पं शय्या, ("तल्पं शय्याऽट्टदारेषु" इत्यमरः) तस्मात्तायत्तः केवलं तदधीनः, अविरतं शय्याशायीत्यर्थः, देहो यस्याः तादृशी।

नितान्तविषण्णः काञ्चनकलससञ्चितानि हरिचन्दनोशीरघनसार-मिलितानि (भ) सलिलानि, विसतन्तुमयानि (म) वासांसि, नलिनीदलनालवृन्तानि च सन्तापहराणि सर्वाणि समाहृत्य ताम् असेवत। तच्च शीतलोपचरणं सलिलमिव तप्ततैले तदङ्गे दहनमिव समन्तात् आविश्चकार। किंकर्तव्यताविमूढां विवशां बालचन्द्रिकाम् ईषदुन्मीलितेन कटाक्षवीचितेन वाष्पाकुलेन विलोक्य नताङ्ग्या सगद्गदमभाषि, "सखि! पञ्चशरः कुसुमायुध इत्यलीकमुच्यते, अहन्तु अनेन अयोमयैः (य) असङ्ख्यैः इषुभिः (र) हन्ये। चन्द्रमसं वड़वानलादधिकसन्तापकरं मन्ये, यदस्मिन् चन्द्रमसि अन्तः प्रविशति शुष्यति समुद्रः, सति निर्गते एव वर्द्धते। (ल) नास्य दुष्कार्य्यं किमपि, यदनेन सहोदरायाः पद्मालयायाः आश्रयभूतमपि कमलं (व) ताड्यते। विरहानलसन्तप्तहृदयस्पर्शेन नूनमुष्णीकृतः स्वल्यायते मलयपवनः। नवपल्लवकल्पितं तल्पमिदम् अनङ्गाग्निशिखापटलमिव सन्तापं तनोति तनोः, हरिचन्दनमपि पुरा निजयष्टिसंश्लेषवदुरगरदनलिप्तोल्वणगरलसङ्कलितमिव (श) तापयति शरीरम्। तदल-

---

(भ) हरिचन्दनेति।—हरिचन्दनं पिङ्गलवर्णचन्दनविशेषः, शुक्लचन्दनो वा, उशीरं वीरणमूलं, घनसारः कर्पूरः, तैः मिलितानि संयुक्तानि, सुगन्धिशीतलानीति भावः।

(म) विसतन्तुमयानि मृणालतन्तुनिर्मितानि, सूक्ष्माणि शीतलानि चेति भावः।

(य) अयोमयैः लौहनिर्मितैः। (र) इषुभिः बाणैः।

(ल) यदिति।—यत यस्मात्, अस्मिन् चन्द्रमसि चन्द्रे, अन्तः समुद्रमध्ये इत्यर्थः, प्रविशति समुद्रः शुष्यति क्षीयते। सति निर्गते समुद्रजलात् निष्क्रान्ते सति, उदिते सति इत्यर्थः, वर्द्धते वृद्धिं गच्छति, अनुदितचन्द्रनिशायां समुद्रजलस्य ह्रासदर्शनात् उदितचन्द्रनिशायाञ्च समुद्रजलस्य उच्छ्वासदर्शनादिति भावः।

(व) सहोदरायाः एकगर्भोत्पन्नायाः, पद्मालयायाः लक्ष्म्याः, उभयोरपि समुद्रमन्थनकाले समुद्रगर्भात् उत्थितत्वात् परस्परसोदर्य्यत्वं बोद्धव्यम्; ("लक्ष्मीः पद्मालया पद्मा" इत्यमरः) आश्रयभूतं निवासस्थानं, पद्मस्यैव लक्ष्म्याः आलयभूतत्वादिति भावः। ताड्यते पीड्यते, चन्द्रोदये पद्मनिमीलनात् चन्द्रकर्त्तृककमलनिपीड़नं बोद्धव्यम्।

(श) निजेति।—निजयष्ट्यां निजदण्डे, हरिचन्दनवृक्षशाखायामित्यर्थः,

मायासीन वः, अत्र तावत् राजकुमार एव भिषक्, सोऽपि अलभ्य एव, किं करोमि ?" इति। बालचन्द्रिका तादृशीं तामवलोक्य समचिन्तयत्, "अत्र तावत् कुमारः सत्वरमानेतव्यो मया, नो चेत् एनां स्मरणीयां गतिं (घ) नेष्यति मदनः। कुमारयोश्च तस्मिन् उद्याने अन्योऽन्य वलोकन-वेलायामसमसायकः समं मुक्तसायक एव, (ङ) तस्मात् कुमारानयनं सुकरमेव"।

इत्यवधार्य्य सा सखीगणं राजबालाया रक्षणे नियुज्य राजसूनो-रन्तिकमगमत्। सोऽपि प्राणवल्लभामुद्दिश्य पुष्पोद्भवेन सह तत्सङ्गमोपायं तर्कयन् आगतां तां सखीमालोक्य सन्तुष्टमनाः "इतो निषीद" (च) इति निर्द्दिष्टासनोपवेशितां अवन्तिसुन्दरीप्रेषितं सकर्पूरं ताम्बूलादिकं विनयेन ददतीं कान्तोदन्तमपृच्छत्। सा सविनयमवादीत्, "देव! विहारोद्याने भवदवलोकनादारभ्य मन्मथमथ्यमाना सा पुष्पतल्पादिष्वपि सन्तापशमनमलब्धवती वामनेव (छ) उन्नततरुफलवत् अलभ्यचतुरःस्थला-लिङ्गनसुखं लिप्सुः स्वयमेव पत्रिकामालिख्य 'वल्लभाय एनाम् अर्पय' इति मां विसृष्टवती, तदत्र देवः प्रमाणम्" इति। राजकुमारः पत्रिकां पपाठ।

"सुभग! कुसुमसुकुमारं जगदनवद्यं निरीक्ष्य ते रूपम्।
मम मानसमभिलषति त्वं चित्तं कुरु तथा मृदुलम्॥" (ज)

---

संश्लेषवन्तः संसर्गविशिष्टाः, शाखामालिङ्ग्य अवस्थिता इत्यर्थः, ये उरगाः सर्पाः, तेषां रदनेषु दन्तेषु, लिप्तं लग्नमित्यर्थः, स्थितमिति यावत्, यत् उल्वणं सुतीव्रं, गरलं विषं, तेन सङ्कलितमिव सम्मिश्रितमिव।

(घ) स्मरणीयां स्मरणार्हां, न तु दर्शनार्हामिति भावः, गतिं दशां, मरण-दशामित्यर्थः।

(ङ) असमसायकः विषमेषुः, पञ्चबाणः काम इत्यर्थः। मुक्तसायकः निक्षिप्तबाणः। समं युगपत्, एकदैव इत्यर्थः, युगपत् द्वावेव शरेणाताडयदिति निष्कर्षः।

(च) इतः अस्मिन् आसने, निषीद उपविश।

(छ) वामना इव ह्रस्वाकारा कन्यका इव।

(ज) सुभगेति।—सुभग! हे सुन्दर! हे प्रियतम! इत्यर्थः, ते तव, कुसुमसुकुमारं पुष्पवत् सुकोमलं, जगति पृथिव्याम्, अनवद्यम् अनिन्दनीयं, सर्व-

इति पठित्वा सादरमवादीत्, "सखि! छायावन्मामनुवर्त्तमानस्य पुष्पोद्भवस्य वल्लभा त्वमिव तस्या मृगाक्ष्या वहिश्चरा: प्राणा इव वर्त्तसे, त्वच्चातुर्य्यमस्यां क्रियायां लतायामालवालमिव (ग) वर्त्तते। यत् तवाभीष्टं, येन मनोरथ: सेत्स्यति, तत् सर्वं करिष्यामि। तया मन्मनस: काठिन्यमाख्यातं, परन्तु यदा अहं तद्दर्शनपथं गत: तदैव सा अपहृत-मन्मानसा स्वं मन्दिरमगात्, तत् कस्य चेतस: काठिन्यं कस्य वा माधुर्य्यं तत् स्वयमेव सा वेत्ति। दुष्कर: कन्यान्त:पुरप्रवेश:, तदनुरूपमुपाय-मुद्भाव्य श्व: परश्वो वा प्रियां सङ्गमिष्ये (घ) इति। एवं मद्वृत्तान्तमुक्त्वा यथा शिरीषमृद्व्या: शरीरबाधा न जायेत तथा अविलम्बम् उपाय-माचर" इति। सा दूती अपि तस्य एवं सप्रेमवचनं श्रुत्वा प्रीता कन्यापुरमयासीत्।

राजपुत्रोऽपि पुष्पोद्भवेन सह यत्र हृदयवल्लभावलोकनं जातं तत्रैव विरहवेदनाविनोदनाय प्रतस्थे। तत्र समन्तात् विचरन् क्वचिदपि अवस्थातुमशक्नुवन् कमपि चतुरवेशं (ङ) मुण्डितशिरसं द्विजमवालोक-यत्, अपृच्छच्च आशिषा संवर्द्धयन्तं (च) "को भवान्? कस्यां विद्यायां निपुण:?" इति। स "विद्येश्वरनामाहम् ऐन्द्रजालिकविद्याकोविदो नाना-देशेषु राजन्यान् तोषयन् उज्जयिनीमद्यागत:" इत्यभिधाय राजपुत्रं सम्यगालोक्य "अस्मिन् लीलोद्याने किमिति भवत: पाण्डुरतानिमित्तम्?"

---

जनमनोहरमित्यर्थ:, रूपं सौन्दर्य्यं, निरीक्ष्य अवलोक्य, मम मे, मानसं चित्तम्, अभिलषति वाञ्छति, त्वां तव रूपं वा इति शेष:, त्वां समीपे प्राप्तुमाकाङ्क्षति इत्यर्थ:, त्वं भवान्, चित्त मन:, तवेति शेष:, तथा तादृक्, यथा ते रूपं सुकुमारं तादृगित्यर्थ:, मृदुलं सुकोमलं, कुरु विधेहि, मां प्रति सदयो भव इत्यर्थ:।

(ग) आलवालं वृक्षमूले जलधारणार्थम "थाइल्" इति प्रसिद्धवेष्टनाविशेष:।

(घ) "सङ्गमिष्ये" इत्यत्र "सङ्गमिष्यामि" इति पाठे—सम्पूर्वकस्य गमे: सकर्मकत्वेन नात्मनेपदम्।

(ङ) चतुर: निपुण:, सर्वकर्मसु दक्षताज्ञापक इत्यर्थ:, वेश: परिच्छदो यस्य तादृशम्।

(च) संवर्द्धयन्तम् आप्याययन्तं, "जयोऽस्तु" इति आशीर्वादकारिणमिति यावत्।

इति पप्रच्छ। पुष्पोद्भवस्तस्य चातुर्य्यं स्वकार्य्योपयोगि तर्कयन् सादरं तमुवाच "ननु ब्रह्मन्! सख्यस्याभाषणपूर्वतया (छ) भवानस्माकं वयस्यो जातः, वयस्यसन्निधौ न खलु किमपि अवाच्यम्। अस्मिन् केलिवने वसन्तमहोत्सवागतया मालवेन्द्रनन्दिन्या अस्य राजपुत्रस्य च आकस्मिक-दर्शनेन अन्योऽन्यानुरागातिशयः सञ्जातः, तस्याश्च सङ्गमोपायविरहेण असौ ईदृशीमवस्थामनुभवति" इति।

विद्येश्वरो (ज) लज्जावनतवदनं राजवाहनमालोक्य सस्मितम् अभाषत, "राजनन्दन! अनुचरे मयि विद्यमाने भवतः किम् असाध्यमस्ति? अहम् इन्द्रजालविद्यया मालवेन्द्रं मोहयन् पौरजनसमक्षमेव तत्तनया-परिणयं सम्पाद्य कन्यान्तःपुरं प्रवेशयिष्यामि, वृत्तान्तश्चैषः राजबालायै सखीमुखेन पूर्वमेव सन्देष्टव्यः" (झ) इति। राजपुत्रः प्रीतात्मा तम-कृत्रिममित्रं विद्येश्वरं सबहुमानं विसृज्य फलितमिव आत्मनो मनोरथं मन्यमानः स्वमन्दिरं सख्या सह उपेत्य बालचन्द्रिकामुखेन प्रियायै विद्ये-श्वरकरिष्यमाणं सङ्गमोपायं वेदयित्वा कौतुकाकृष्टचेताः कथञ्चिदपि क्षपां (ञ) क्षपितवान्।

परेद्युः प्रभाते विद्येश्वरो गीतिनीतिचतुरः महता परिजनेन सह राजभवनद्वारमुपेत्य दौवारिकेण स्ववृत्तान्तं निवेद्य तद्दर्शनकुतूहलाविष्टेन सावरोधेन (ट) मालवनाथेन समाहूतः कक्षान्तरं प्रविश्य सविनयम् आशिषं प्रयुज्य राजानुमत्या परिजनवाद्यमानेषु वादित्रेषु गायिकासु सुस्वरं गायन्तीषु पिच्छिकां भ्रामयन् (ठ) मुकुलितनयनः क्षणमस्थात्।

---

(छ) सख्यस्य मित्रतायाः, आभाषणम् आलापः, पूर्वं प्रथमं यस्य तस्य भावः तत्ता तया, "सम्बन्धमाभाषणपूर्वमाहुः" इति रघुवंशीयश्लोकांशोऽत्र स्मर्त्तव्यः, परस्परा-लापेनैव सखित्वं जायते इति भावः।

(ज) विद्येश्वरः पूर्वोक्त ऐन्द्रजालिकः।

(झ) सन्देष्टव्यः वाचयितव्यः, ज्ञापयितव्य इत्यर्थः, ("सन्देशवाक् वाचिकं स्यात्" इत्यमरः)।

(ञ) क्षपां रात्रिम्। (ट) सावरोधेन अन्तःपुरस्थरमणीवर्गसहितेन।

(ठ) पिच्छिकां मयूरपुच्छमयद्रव्यविशेषं, सा तु इन्द्रजालप्रदर्शनसमये

अनन्तरं विषमं विषमुद्वमन्तः फणावन्तः (ड) शिरोरत्नराजिभिस्तमुद्देशम् उद्भासयन्तो विचरन्ति स्म। गृध्राश्च बहवः तुण्डैस्तान् क्षणेन अहीन्द्रान् आदाय अन्तरीक्षमलञ्चक्रुः (ढ)। ततो द्विजवरः नरसिंहस्य हिरण्यकशिपोर्विदारणमभिनीय राजानं महदाश्चर्यान्वितं कृत्वा अभाषत, "राजन्! उपसंहारे (ण) भवता किञ्चित् शुभशकुनं द्रष्टव्यं, तत् कल्याणावाप्तये भवदात्मजाकृतिः कस्या अपि तरुण्याः सर्वगुणालङ्कृतेन केनचित् राजकुमारेण परिणयः सम्पादनीयः; तत् यदि अभ्यनुज्ञा स्यात् तदा दर्शयामि" इति। अथ "तथा" इति अनुमोदितः सः सर्वजन-मोहनमञ्जनं चक्षुषोर्निक्षिप्य समन्तात् व्यलोकयत्। सर्वेषु तदैन्द्रजालिकमेव पश्यत्सु साङ्कुतं रागफुल्लहृदयेन राजवाहनेन पूर्वसङ्केतसमागतामनेक-भूषणभूषिताङ्गीमवन्तिसुन्दरीं वैवाहिकमन्त्रतन्त्रनैपुण्येनाग्निं प्रज्वाल्य साक्षीकृत्य च समयोजयत्। तदनु "सर्वे ऐन्द्रजालिकाः स्वस्थानं व्रजन्तु" इति द्विजेनाभिहिते सर्वे ते मायापुरुषाः (त) यथायथमन्तर्हिताः; राज-वाहनश्च यथासुखं कन्यान्तःपुरमविशत्। मालवपतिस्तु तदद्भुतं मन्यमान-स्तस्मै द्विजन्मने प्रभूतं धनं दत्त्वा विसृज्य स्वं मन्दिरमाविवेश। एवं दैव-मानुषबलेन मनोरथसाफल्यम् उपेतो रहसि कान्तया सुरतसुखमुपभुञ्जन् दिने दिने चतुर्दशभुवनवृत्तान्तवर्णनेन प्रियां रञ्जयामास।

इति पञ्चमोच्छ्वासः।

---

दर्शकानां नेत्रविभ्रममुत्पादयतीति मन्तव्यम्। भ्रामयन् मन्त्रपाठसहितं मस्तकोपरि वारत्रयं वारसप्तकं वा घूर्णयन्।

(ड) फणावन्तः फणिनः, सर्पा इत्यर्थः।

(ढ) तुण्डैः मुखैः, अहीन्द्रान् महासर्पान्। अलञ्चक्रुः शोभयामासुः।

(ण) उपसंहारे क्रीडाप्रदर्शनावसानकाले।

(त) मायेति।—मायया इन्द्रजालविद्यया, प्रदर्शिताः पुरुषाः जनाः।

# उत्तरखण्डे

## अथ प्रथमोच्छ्वासः।

कदाचित् सुरतखेदसुप्तयोस्तयोः स्वप्ने विसगुणनिगड़ितपादो (क) हंसः कश्चिददृश्यत अबुध्येतां (ख) चोभौ। अथ (ग) तस्य राजपुत्रस्य रजतशृङ्खलानिगड़ितं (घ) चरणयुगलमालोक्य "किमेतत् !!" इति परित्रासाकुला राजबाला उच्चैश्चक्रन्द, येन तत् सकलमेव कन्यान्तः-पुरमग्निपरीतमिव पिशाचोपहतमिव वेपमानं, (ङ) किंकर्त्तव्यविमूढ़म्, अगण्यमानरहस्यरक्षासमयम्, अवनितलाहन्यमानगात्रम्, आक्रन्दविदीर्य्य-माणकण्ठम्, अश्रुप्लुतकपोलमाकुलीबभूव (च)। तुमुले च अस्मिन् समये अबाधितप्रवेशाः "किं किम्?" इति सहसा उपसृत्य विविशुः

---

(क) विसेति।—विसस्य मृणालस्य, गुणेन तन्तुना, निगड़ितौ शृङ्खलितौ, पादौ चरणौ यस्य तादृशः।

(ख) अबुध्येतां जागरितवन्तौ।

(ग) अथ जागरणानन्तरम्। (घ) रजतेति।—रजतशृङ्खलया रौप्यनिर्मित-निगड़ेन, निगड़ितम् आबद्धम्।

(ङ) येन उच्चैः क्रन्दनेन। अग्निपरीतमिव अनलव्याप्तमिव। पिशाचेति।—पिशाचेन हिंसाप्रकृतिदेवयोनिविशेषेण, उपहतमिव आक्रान्तमिव। वेपमानं कम्पमानम्।

(च) अगण्यमानेति।—अगण्यमानः अविविच्यमान इत्यर्थः, रहस्यस्य गोपनीय-विषयस्य, अवन्तीसुन्दरीराजवाहनयोः प्रणयघटितव्यापारस्येत्यर्थः, रक्षायाः पालनस्य, अप्रकाशस्येत्यर्थः, समयः कालो यत्र तादृशम्। अवनीति।—अवनितले भूतले, आहन्यमानानि ताड्यमानानि, इतस्ततो लुठ्यमानानीत्यर्थः, गात्राणि देहाः, सखीजनानामिति भावः यत्र तादृशम्। आक्रन्देति।—आक्रन्देन उच्चैः रोदनेन, विदीर्य्यमाणाः भिद्यमानाः, विक्षियमाणा इति यावत्, कण्ठाः अन्तःपुरिकाणां कण्ठस्वरा यत्र तादृशम्। अश्रुप्लुतेति।—अश्रुभिः नेत्रजलैः, प्लुताः सिक्ताः, कपोलाः अन्तःपुरिकाणां गण्डदेशा यत्र तादृशम्। आकुलीबभूव विवशीबभूव।

अन्तःपुरचारिणः पुरुषाः, (ज) ददृशुश्च तदवस्थं राजकुमारम्। तत्प्रभावनिरुद्धनिग्रहसामर्थ्यास्तु ते (झ) सद्य एव तमर्थं चण्डवर्मणे निवेदयामासुः। सोऽपि कोपादागत्य निर्दहन्निव दहनगर्भया दृशा निशाम्य जातप्रत्यभिज्ञः (ञ) "कथं स एवैषः मदनुजमरणनिमित्तभूतायाः (ट) पापाया बालचन्द्रिकायाः पत्युर्वनगर्वितस्य वैदेशिकवणिक्पुत्रस्य पुष्पोद्भवस्य मित्रं रूपाभिमानी कलाकोविदः नैकविधविप्रलम्भोपायपाटवावर्जितमूढपौरजनाध्यारोपितवितथदेवतानुभावः (ठ) कपटधार्मिकः निगूढपापशीलः (ड) चपलो ब्राह्मणब्रुवः !! कथमिव एनम् अनुरक्ता मादृशेष्वपि पुरुषसिंहेषु सावमाना (ढ) पापियमवन्तिसुन्दरी !! पश्यतु पतिमद्यैव शूलाधिरूढमनार्य्यशीला कुलपांसनी" (ण) इति निर्भर्त्सयन् भीषण-

---

(ज) अन्तःपुरचारिणः पुरुषाः अन्तःपुररक्षकाः।

(झ) तदिति।—तस्य राजवाहनस्य, प्रभावेण तेजसा, दैवप्रभयेति भावः, निरुद्धं प्रतिहतं, निग्रहसामर्थ्यं पीडनशक्तिः येषां तादृशाः। ते अन्तःपुररक्षकाः।

(ञ) निर्दहन् इव भस्मीकुर्वन्निव। दहनगर्भया अभ्यन्तरानलया, अग्निं विकीरन्त्या इवेत्यर्थः। निशाम्य दृष्ट्वा। जातेति।—जाता उत्पन्ना, प्रत्यभिज्ञा स्मरणसहकृतं ज्ञानं यस्य तादृशः, पूर्वदृष्टोऽयं जनः इति ज्ञानसम्पन्न इत्यर्थः।

(ट) मदिति।—मम अनुजस्य दारुवर्मणः, मरणे मृत्युविषये, निमित्तभूतायाः कारणस्वरूपायाः।

(ठ) कलाकोविदः कलासु चतुःषष्टिकलाविद्यासु, कोविदः अभिज्ञः। नैकविधेति।—नैकविधेषु बहुप्रकारेषु, विप्रलम्भस्य वञ्चनायाः, उपायेषु साधनेषु, यत् पाटवं नैपुण्यं, तेन आवर्जितैः वशीकृतैः, मूढैः अनभिज्ञैः, पौरजनैः नगरवासिलोकैः, अध्यारोपितः प्रख्यापित इति यावत्, वितथः मिथ्या, दैवताऽनुभावः दैवप्रभावो यस्य तादृशः, विविधप्रतारणानिपुणस्य अस्य मोहनवाक्येन विमुग्धैः पौरैः देवोऽयं कश्चित् लीलया नरदेहं धृत्वा विराजते इति मन्यमान इत्यर्थः।

(ड) निगूढेति।—निगूढं गुप्तं यथा तथा, पापे पापानुष्ठाने, यद्वा—पापं पापपरायणं, शीलं स्वभावो यस्य तादृशः।

(ढ) सावमाना सावज्ञा, अवज्ञाकारिणीत्यर्थः।

(ण) अनार्य्यशीला असच्चरित्रा। कुलपांसनी कुलाङ्गारा, कुलकलङ्ककारिणीत्यर्थः।

भ्रुकुटिदूषितललाटः काल इव काललोहदण्डकर्कशेन (त) बाहुदण्डेन अवलम्ब्य हस्ताम्बुजे रेखाऽम्बुजरथाङ्गलाञ्छने (थ) राजपुत्रं सरभसम् (द) आचकर्ष। स तु स्वभाववीरः सहिष्णुतैकप्रतिक्रियां (ध) देवीमिव ताम् आपदमवधार्य "स्मर तस्याः हंसगामिनि ! हंसकथायाः, (न) सहस्व वासु ! (प) मासद्वयम्" इति प्राणत्यागरागिणीं (फ) प्राणसमां समाश्वास्य रिपुवश्यतामगात्।

अथ विदितवार्त्तावार्त्तौ (ब) महादेवीमालवेन्द्रौ जामातरमाकारपक्षपातिनौ प्राणत्यागोपन्यासेन (भ) शत्रुणा जिघांस्यमानं ररक्षतुः, न तु शेकतुः तमप्रभुत्वादुत्तारयितुम् (म) आपदः। स किल चण्डशीलः (य)

---

(त) भीषणेति।—भीषणया भयानकया, भ्रुकुट्या भ्रूभङ्गेन, दूषितं कुत्सितदर्शनं, भयङ्करमिति यावत्, ललाटं भालदेशो यस्य तादृशः।

(थ) रेखेति।—रेखा सार्वभौमत्वसूचकोर्द्ध्वादिलेखा, अम्बुजं पद्मं, रथाङ्गं चक्रं, लाञ्छनं चिह्नं यत्र तथाभूते, राजचक्रवर्त्तित्वसूचकोर्द्ध्वरेखादिचिह्नशोभिते इत्यर्थः।

(द) सरभसं सवेगम्। (ध) सहिष्णुतेति।—सहिष्णुता सहनशीलता एव, उपेक्षा एवेति यावत्, एका केवला, प्रतिक्रिया प्रतीकारो यस्यास्तादृशीम्।

(न) हंसकथायाः हंसरूपधरमुनेः मासद्वयभोग्यायाः शापवार्त्तायाः।

(प) वासु ! बाले ! ("अथ बाला स्यात् वासूः" इत्यमरः)।

(फ) प्राणेति।—प्राणत्यागे जीवनविसर्जने, रागः अनुरागः, इच्छा इत्यर्थः यस्यास्तादृशीं, जीवनविसर्जनोद्यताम् इत्यर्थः।

(ब) विदिता ज्ञाता, वार्त्ता कुमारीकुमारयोर्वृत्तान्तः याभ्यां तादृशौ, अत एव आर्त्तौ कातरौ, दुहितृस्नेहादिति भावः।

(भ) आकारेति।—आकारेण मूर्त्तिदर्शनेन, राजवाहनस्य चक्रवर्त्तित्वसूचकमनोहररूपदर्शनेनेत्यर्थः, पक्षपातः स्नेहाकर्षणमस्ति अनयोरिति तादृशौ। प्राणेति।—प्राणत्यागस्य जीवनविसर्जनस्य, उपन्यासेन कथनेन, "कुमारमेनं हन्यात् चेदावां जीवनपरित्यागं करिष्याव:" इत्येवं-कथनेनेत्यर्थः। शत्रुणा चण्डवर्मणा। जिघांस्यमानं हन्तुमिष्यमाणं, हननोद्यतमित्यर्थः।

(म) अप्रभुत्वात् स्वामित्वाभावात्, पुत्रे राज्यभारप्रदानात् स्वस्य प्रभुत्वाभाव इति भावः। उत्तारयितुम् उद्धारयितुं, मोचयितुमित्यर्थः।

(य) चण्डशीलः अत्यन्तकोपनस्वभावः।

चण्डवर्मा सर्वमुदन्तजातं राजराजगिरौ (र) तपस्यते दर्पसाराय सन्दिश्य सर्वमेव पुष्पोद्भवपरिजनं सर्वस्वहरणपूर्वकं सद्य एव बन्धने (ल) निक्षिप्य कृत्वा च राजपुत्रं मृगराजशावकमिव दारुपञ्जरनिबद्धम् (व) अवधूत-दुहितृप्रार्थनस्य अङ्गराजस्य उन्मूलनाय अङ्गानभियास्यन् अनन्य-विश्वासान्निनाय, रुरोध च बलभरदलितकम्पश्चम्पाम्। (श) चम्पेश्वरोऽपि सिंहवर्मा सिंह इव असह्यविक्रमः प्राकारं भित्त्वा (ष) महता बलसमुदायेन निर्गत्य स्वप्रहितदूतगणाहूतानां (स) साहाय्यदानाय अतिसत्वरमापततां (ह) राज्ञामचिरभाविन्यपि सन्निधौ अदृष्टापेक्षः साक्षादिवावलेपो वपुष्मान् प्रतिबलमाचक्राम, (क) जगृहे च महति सम्प्रहारे अतिमानुष-

(र) उदन्तजातं वृत्तान्तसमूहम्। राजेति।—राज्ञां यक्षाणां, राजा अधिपतिः राजराजः कुबेरः, ("राजराजो धनाधिपः" इति कुबेरपर्य्याये अमरः) तस्य गिरौ पर्वते, कैलासाचले इत्यर्थः। तपस्यते तपस्यां कुर्वते।

(ल) बन्धने कारागारे, ("कारा दूत्यां प्रसेवके। बन्धने बन्धनागारे हेमकारिकयोरपि" इति विश्वः)।

(व) दारुपञ्जरनिबद्धं काष्ठनिर्मितपिञ्जराबद्धम्।

(श) अवधूतेति।—अवधूता अवज्ञाता, उपेक्षिता इत्यर्थः, दुहितुः अङ्ग-राजतनयायाः, प्रार्थना चण्डवर्मकर्तृकयाञ्चा येन तादृशस्य, चण्डवर्मा अङ्ग-राजान्तिके तद्दुहितुः पाणिं प्रार्थयामास, स तु तां प्रार्थनां न पूरयामास इति तं प्रति यात्रा इति भावः। उन्मूलनाय राज्यात् विताड़नाय, विनाशायेत्यर्थः। अङ्गान् अङ्गाख्यदेशान्। अनन्यविश्वासात् स्वेतरस्मिन् जने प्रत्ययाभावात्, कस्मिन् अपि जने राजवाहनरक्षणभारार्पणे विश्वासाभावादित्यर्थः। निनाय नीतवान्, स्वेन सहैवेति भावः। बलेति।—बलानां सैन्यानां, भरेण आतिशय्येन, पदभरेण वा, दलः जनितः इत्यर्थः, कम्पः चलनं येन तादृशः। चम्पां तदाख्याम् अङ्गदेश-राजधानीमित्यर्थः।

(ष) प्राकारं प्राचीरं, नगरवेष्टनप्राचीरमित्यर्थः। भित्त्वा उल्लङ्घ्य इत्यर्थः।

(स) स्वेति।—स्वेन आत्मना, अङ्गराजेनेत्यर्थः, प्रहितैः प्रेरितैः, दूतगणैः दूतसमूहैः, आहूतानाम् आकारितानां, कृताह्वानानामित्यर्थः।

(ह) आपतताम् आगच्छताम्।

(क) अचिरभाविन्यपि शीघ्रमेव भविष्यत्यपि, सन्निधौ समीपवर्त्तित्वे, समागमे

प्राणबलेन (ख) चण्डवर्मणा। स च तद्दुहितरि अम्बालिकायामति-मात्राभिलाषः प्राणैरेनं न व्ययूयुजत्, परमजीगणत् बन्धनगृहम्, अजीगणच्च गणकैः "अद्येव निशान्ते (ग) राजबाला विवाह्या" इति।

इत्थं गते च तस्मिन् कुबेराचलात् (घ) प्रतिनिवृत्य एणजङ्घो नाम कश्चित् दूतः प्रभोर्दर्पसारस्य प्रतिसन्देशम् (ङ) आवेदयत्, "रे मूढ़! किमस्ति कन्यान्तःपुरदूषकेऽपि कश्चित् कृपावसरः? स्थविरः स राजा जराविमूढ़चित्तो दुहितृपक्षपाती यदेव किञ्चित् प्रलपति, त्वयाऽपि किं तदनुमत्या स्थातव्यम्? अविलम्बितमेव तस्य कामोन्मत्तस्य चित्रवधवार्त्ता-प्रेषणेन अस्माकं श्रोत्रोत्सवो(च)विधेयः, सा च दुष्टकन्या सहानुजेन कीर्त्ति-सारेण निगड़ितचरणा कारायां निरोद्धव्या" इति। तदाकर्ण्य "प्रातरेव राजभवनद्वारे तं कुमारीपुरदूषकं स्थापय, अहं कृतविवाहश्च समुत्थाय चण्डपोतेन मातङ्गपतिना तं विनाश्य तदधिरूढ़ एव शत्रुसाहाय्याय प्रत्या-सीदतो राजन्यान् प्रतिग्रहीष्यामि" (छ) इति समादिदेश पार्श्वचरान्।

---

इति यावत्। अदत्ता अकृता इत्यर्थः, अपेक्षा समयातिवाहनं येन तादृशः, निरपेक्षः इत्यर्थः, तेषामागमनस्य प्रतीक्षामकृत्वैव इति भावः। साक्षात् प्रत्यक्ष, वपुष्मान् देहधारी, मूर्त्तिमानित्यर्थः, अवलेप इव गर्व इव। प्रतिबल शत्रुसैन्यम्।

(ख) सम्पराये युद्धे। अतीति।—अतिमानुषं मानुषातीतम्, अलौकिक-मित्यर्थः, प्राणानाम् असूनां, बलं सामर्थ्यं यस्य तादृशेन; यद्वा—अतिमानुषाः प्राणा असवः, जीवनीशक्तिरिति यावत्, बलञ्च यस्य तादृशेन।

(ग) व्ययूयुजत् वियोजितवान्, मारितवानित्यर्थः। (णिजन्तयुजेर्लुङ्)। बन्धनगृहं कारागारम्। अजीगणत् गणयामास, शुभवैवाहिकलग्ननिश्चयीकरणार्थ-मिति भावः। (णिजन्तगणधातोर्लुङ्)। निशान्ते रात्रेरवसाने।

(घ) तस्मिन् चण्डवर्मणि, इत्थम् एवम्प्रकारं, गते अनुष्ठिते इत्यर्थः, निशान्ते राजबाला विवाह्या इत्येवं कृतनिश्चये सतीत्यर्थः। कुबेराचलात् कुबेरावास-भूतपर्वतात्, कैलासादित्यर्थः।

(ङ) प्रतिसन्देशं प्रतिवचनं, प्रत्युत्तरमित्यर्थः।

(च) चित्रेति।—चित्रवधः विविधयातनादानपूर्वकहननं, तस्य वार्त्ताप्रेषणेन संवादप्रेरणेन। श्रोत्रोत्सवः कर्णसुखम्।

(छ) तदधिरूढ एव तस्मिन् चण्डपोताख्यगजाधिपे, अधिरूढ़ः अधिष्ठितः।

अथ प्रत्यूषे एव राजद्वारानीतस्य राजवाहनस्य अङ्घ्रियुगलमसुच्यत (ज) रजतशृङ्खलया। सा च काचित् अप्सरोरूपिणी (झ) भूत्वा प्राञ्जलिर्व्यजिज्ञपत्, "देव! कुरु कृपां मयि, अहमस्मि सोमरश्मिसम्भवा (ञ) सुरतमञ्जरी नाम सुरसुन्दरी। एकदा मे नभसि नलिनलुब्धमुग्धकलहंसानुबद्धवक्त्रायाः तन्निवारणक्षोभविच्छिन्नविगलिता हारयष्टिर्हैमवते सरसि मन्दोदके मग्नोन्मग्नस्य (ट) महर्षेर्मार्कण्डेयस्य मस्तके समपतत्; पातितश्च कोऽपि तेन कोपितेन मयि शापः, 'पापे! भजस्व लोहजातिमजातचैतन्या सती' इति। स पुनः प्रसाद्यमानस्त्वत्पादपद्मद्वयस्य (ठ) मासद्वयमात्रं सन्दानतामेत्य निस्तरणीयामिमाम् आपदमपरिक्षीण-

---

अवसादाय्याय सिंहवर्मणः साहाय्यकरणार्थं, प्रत्यासीदतः प्रत्यासन्नान्। प्रतिग्रहीष्यामि अवरोत्स्यामि, विनाशयिष्यामीत्यर्थः।

(ज) अङ्घ्रियुगलं चरणद्वयम। असुच्यत मुक्तम्।

(झ) सा रजतशृङ्खला। अप्सरोरूपिणी अप्सरसो रूपधारिणी।

(ञ) सोमरश्मिसम्भवा चन्द्रकिरणोत्पन्ना।

(ट) नभसि आकाशे, गच्छन्त्या इति शेषः। नलिनेति।—नलिने पद्मे, मम हस्तस्थलीलाकमले इति भावः, लुब्धः लोलुपः, तद्ग्रहणेच्छुरित्यर्थः, मुग्धः सुन्दरः, यः कलहंसः मधुररवकारी गगनचारी कादम्बाख्यहंसविशेषः, तेन अनुबद्धम आसक्तं, वक्त्रं मुखं यस्यास्तथाभूतायाः, हंसं प्रति निबद्धदृष्टिकाया इति भावः; यद्वा—नलिने पद्मे, लुब्धः अत एव मुग्धः मूढः, मन्मुखमेव कमलमिति भ्रान्तिमानिति भावः, यः कलहंसः तेन अनुबद्धं संसृष्टं, कमलबुद्ध्या मन्मुखभक्षणोद्यमादिति भावः, वक्त्रं यस्यास्तथाभूतायाः। तदिति।—तस्य कलहंसस्य, निवारणे निराकरणे, दूरीकरणे इत्यर्थः, यः क्षोभः चाञ्चल्यं, मनसः सम्भ्रम इत्यर्थः, तेन विच्छिन्ना त्रुटिता, सवेगहस्तचालनेन इति भावः, अत एव विगलिता पतिता। हैमवते हिमालयोत्पन्ने, सरसि सरोवरे। मन्दोदके स्वल्पजले। मग्नोन्मग्नस्य अवगाढोद्गाढस्य, निमग्नो भूत्वा उत्थितस्य इत्यर्थः।

(ठ) प्रसाद्यमानः अनुनीयमानः, मयेति शेषः। त्वत्पादपद्मद्वयस्य भवच्चरणकमलयुगलस्य।

शक्तित्वञ्च इन्द्रियाणाम् (ड) अकल्पयत्। तथाभूताञ्च (ढ) मां कदाचित् ऐक्ष्वाकस्य (ण) राज्ञो वेगवतः पौत्रः पुत्रो मानसवेगस्य वीरशेखरो नाम विद्याधरः शङ्करगिरौ समभ्यगमत्। (त) अथासौ पितृप्रयुक्ते (थ) वैरे वर्त्तमाने विद्याधरचक्रवर्त्तिनि नरवाहनदत्ते निराशः (द) "तदपकारक्षमोऽयम्" इति तपस्यता दर्पसारेण समसृज्यत, प्रतिश्रुतञ्च तेन अस्मै स्वसुः (ध) अवन्तिसुन्दर्य्या दानम्।

एकदा मनोरथप्रियाम् (न) अवन्तिसुन्दरीं दिदृक्षुरसौ कामपरवशः तत्कुमारीपुरमुपेत्य अन्तरितस्तिरस्करिण्या विद्यया तां त्वदङ्गोपाश्रयां (प) सुरतखेदखिन्नगात्रीं ददर्श। स तु कुपितोऽपि त्वदनुभावप्रतिबद्ध-निग्रहाध्यवसायः पाण्डुलोहशृङ्खलमय्या (फ) मया तव पादपद्मयुगलं

(ड) सन्दानतां बन्धनरज्जुतां, शृङ्खलरूपतामित्यर्थः। निस्तरणीयां मोचनीयाम्। आपदं विपत्तिं, शापमित्यर्थः। अपरिक्षीणेति।—अपरिक्षीणा अहीना, शक्तिः सामर्थ्यं, ज्ञानमिति भावः, तस्य भावस्तत्त्वम्; लोहजातित्वेऽपि ऐन्द्रियकं ज्ञानं मे अव्याहतमेव आसीदिति भावः।

(ढ) तथाभूतां लोहजातिं प्राप्ताम्।

(ण) ऐक्ष्वाकस्य इक्ष्वाकुवंशीयस्य।

(त) शङ्करगिरौ कैलासाचले। समभ्यगमत् अलभिष्ट।

(थ) पितृप्रयुक्ते पित्रा कृते।

(द) निराशः नरवाहनदत्तस्य अपकारसाधने अक्षमतया हताशः।

(ध) समसृज्यत संसृष्टः, मिलित इत्यर्थः। प्रतिश्रुतं प्रतिज्ञातम्। तेन दर्पसारेण। अस्मै वीरशेखराय। स्वसुः भगिन्याः।

(न) मनोरथप्रियां मानसप्रणयिनीं, न तु साक्षात् प्रियां, दर्पसारेण भगिनीदानप्रतिश्रुतेः प्राक् अवन्तिसुन्दर्य्या सह परिचयाभावादिति भावः।

(प) अन्तरितः तिरोहितः, अदृश्यभावेन अवस्थित इत्यर्थः। तिरस्करिण्या विद्यया आत्मनः अदृश्यत्वसाधिकया शक्त्या। त्वदङ्गोपाश्रयां तव क्रोडोपधानां, तव क्रोड़े मस्तकं संस्थाप्य शयानामित्यर्थः।

(फ) त्वदिति।—तव भवतः, अनुभावेन प्रभावेण, तेजसा इत्यर्थः, प्रतिबद्धः बाधितः, प्रतिहतः इत्यर्थः, निग्रहस्य पीड़नस्य, अध्यवसायः उद्योगः, प्रवृत्तिरित्यर्थः यस्य तथाभूतः। पाण्डुलोहशृङ्खलमय्या रौप्यशृङ्खलरूपिण्या।

निगड़यित्वा (ब) सक्रोपमपासरत् । अवसितश्च (भ) ममाद्य शापः, प्रसीद, किमिदानीं तव करणीयम् ?" इति प्रणिपतन्तीं तां स राजपुत्रः "वार्त्तया अनया मत्प्राणसमां समाश्वासय" इति व्यादिश्य (म) व्यसर्जयत् ।

अस्मिन्नेव क्षणे "हतो हतश्चण्डवर्मा केनचित् दुष्करकर्मकारिणा तस्करेण एकेनैव नखरप्रहारेण, राजमन्दिरोद्देशश्च शवशतमयमापादयन् अचकितगतिः (य) असौ विहरति" इति वाचः समुदचरन् । तदाकर्ण्य राजवाहनस्तमेव मत्तहस्तिनमधिरुह्य सवेगं राजभवनमुपेत्य गम्भीरेण स्वरेण समभ्यधात्, "कः स महापुरुषः येनैतत् मानुषमात्रदुष्करं महत् कर्म अनुष्ठितम् ? आगच्छतु, स मया सह इमं मत्तहस्तिनमारोहतु । अभयमेव मदुपकण्ठवर्त्तिनो देवदानवैरपि विगृह्यमाणस्य" (र) इति । निशम्य एतत् सञ्जातहर्षं तं पुमांसं कृताञ्जलिमारोहन्तं कुञ्जराधिपं निर्वर्ण्य (ल) हर्षोत्फुल्लदृष्टिः "अहो ! प्रियवयस्यो मे अपहारवर्मा !!" इति पश्चात् निषीदतः (व) अस्य बाहुदण्डयुगलमुभयभुजमूलप्रवेशित-मग्रेऽवलम्ब्य स्वमङ्गमालिङ्गयामास, पर्य्यवेष्टयच्च स्वयं पृष्ठतः चालिताभ्यां बाहुभ्याम् ।

अनन्तरञ्च अपहारवर्मा विविधप्रहरणजातमुपयुञ्जानः प्रतिबलवीरान्

---

(ब) निगड़यित्वा शृङ्खलयित्वा, बद्ध्वा इत्यर्थः ।

(भ) अवसितः अवसानं गतः, भोगकालः समाप्त इत्यर्थः ।

(म) व्यादिश्य आज्ञाप्य, कथयित्वा इत्यर्थः ।

(य) एकेनैव नखरप्रहारेण नखराकारैकमात्रशस्त्राघातेन । शवेति ।—शवानां विगतजीवप्राणिनां, शतमयं बहुशतसङ्ख्यकं, बहुशवव्याप्तमित्यर्थः । अचकितगतिः निर्भयप्रचारः, स्वच्छन्दगतिरिति यावत्, ("चकितं भयसम्भ्रमे" इत्यमरः) । असौ तस्करः ।

(र) मदुपकण्ठवर्त्तिनः मम समीपे अवस्थायिनः । विगृह्यमाणस्य युध्यमानस्य ।

(ल) कुञ्जराधिपं राजवाहनाधिष्ठितं चण्डपोताख्यमातङ्गराजम् । निर्वर्ण्य दृष्ट्वा ।

(व) निषीदतः उपविशतः ।

बहुप्रकारयोधिनः (अ) क्षितौ विचिक्षेप, ददर्श च क्षणेन तद
मन्येन समन्ततोऽभिमुखमभिधावता सैन्यनिचयेन परिक्षिप्तम्। (
कश्चित् परमसौम्याकृतिः इषुवर्षेण रिपुकुलमभिवर्षन् प्रजविन
सन्निकृष्य पूर्वपरिचयदानप्रत्ययात् (स) "अयमेव स देवो राज
इति प्रणम्य अपहारवर्मणि निविष्टदृष्टिः आचष्ट, (ह) "वयस्य !
दिष्टेन मार्गेण उपस्थापितम् (क) एतत् अङ्गराजसाहाय्यदानाय
राजन्यकम्, (ख) अरिबलञ्च विहतविध्वस्तं स्त्रीबालहार्य्यश
वर्तते, किमन्यत् करणीयम् ?" इति। हृष्टस्तु व्याजहार
वर्मा, "देव ! दृष्टिदानेन अनुगृह्यतामयमाज्ञाकरः। व
अहमेव, अमुना रूपेण धनमित्राख्यया च अन्तरितो (घ)

---

(अ) विविधप्रहरणजातं धनुः-खड्ग-भल्लादिनानाविधास्त्रसमूहम्, प्रयुञ्जानः, निक्षिपन् इत्यर्थः। प्रतिबलवीरान् शत्रुसैन्यान्। बह्विति।—नानाविधः, योधः युद्धम् एषामस्तीति तादृशान् विविधयुद्धकुशलिन इत्य बहुप्रकाराः योधाः योद्धारः यत्र सन्तीति तादृशान्। विचिक्षेप पातयामा त्यर्थः।

(ष) परिक्षिप्तं निराकृतं, विमुखीकृतमित्यर्थः।

(स) इषुवर्षेण बाणवर्षणेन। अभिवर्षन् आच्छादयन्नित्यर्थः। प्रज वेगशालिना, शीघ्रगामिना इत्यर्थः। सन्निकृष्य समीपमागत्य। पू प्राक्, यत् परिचयदानम् "एवंविधाकारः एवंविधस्वभावः देवो राजवाहन रूपेण अपहारवर्मकर्तृकलक्षणवर्णनमित्यर्थः, तत्र प्रत्ययात् विश्वासात्।

(ह) निविष्टदृष्टिः निक्षिप्तदृष्टिः। आचष्ट अवोचत्।

(क) त्वदादिष्टेन त्वया कथितेन। मार्गेण पथा, प्रणाल्या स्थापितं समानीतम्।

(ख) राजन्यकं राजसमूहः।

(ग) विहतेति।—विहतं प्रतिहतं, पराजितमित्यर्थः, तच्च विनाशितञ्चेति तादृशम्, अत एव स्त्रीभिः अबलाभिः, तथा बालैः दुर्बलै हार्य्याणि अपहरणीयानि, ग्राह्याणीति यावत्, शस्त्राणि अस्त्राणि यस्य तत

(घ) धनमित्राख्यया धनमित्रनाम्ना, अन्तरितः आच्छादितः, इत्यर्थो वा, धनमित्रेण सह मम कोऽपि भेदो नास्ति इति भावः।

स एव अद्य निर्गमय्य (ङ) बन्धनात् अङ्गराजम् अस्मदन्तीयेन अमुना च राजन्यकेन सह एकान्ते सुखोपविष्टं देवमुपतिष्ठतु (च) यदि न दोषः ?" इति । देवोऽपि "यथा ते रोचते" इति तम् आभाष्य क्वचित् गङ्गातरङ्गपवनशीतले (छ) महीरुहतले द्विरदात् अवतीर्य्य (ज) प्रथमसमवतीर्णेन उपहारवर्मणा स्वहस्तसत्वरसमीकृते भागीरथी-पुलिनदेशे (झ) सुखं निषसाद । तथा निषण्णञ्च तम् उपहारवर्माऽर्थपाल-प्रमति-मित्रगुप्त-मन्त्रगुप्त-विश्रुतैः मैथिलेन च प्रहारवर्मणा काशीभर्त्रा च कामपालेन चम्पेश्वरेण सिंहवर्मणा च सह समुपेत्य धनमित्रः प्रणिपपात । सोऽपि सहर्षमभ्युत्थितः "कथं समस्त एवैषः मित्रगणः समागतः !! को नाम अस्मत्सदृशः !!" इति कृतयथोचितोपचारान् गाढं परिरेभे, (ञ) काशीपतिमैथिलाङ्गराजांश्च सुहृन्निवेदितान् पितृवत् अपश्यत् । तैश्च हर्षकम्पितपलितं सवेगमुपगूढः (ट) परमभ्यनन्दत् । ततः प्रवृत्तासु

---

(ङ) स एव धनमित्र एव । निर्गमय्य बहिरानीय, उद्धार्य्य इत्यर्थः । बन्धनात् कारागृहात् ।

(च) एकान्ते निर्जने । देवं भवन्तं राजवाहनमित्यर्थः । उपतिष्ठतु आराधयतु, सेवतामित्यर्थः ।

(छ) गङ्गेति ।—गङ्गायाः भागीरथ्याः, तरङ्गपवनेन ऊर्मिसंसृष्टवायुना, शीतले, गङ्गाम्भःशीकरसंसृष्टसुशीतलवायुप्रवाहसंस्पर्शजनितशीतले इत्यर्थः ।

(ज) द्विरदात् हस्तिनः ।

(झ) स्वहस्तेति ।—स्वहस्ताभ्यां निजकराभ्यां, सत्वरं शीघ्रं, समीकृते उन्नतावनतभावं दूरीकृत्य समभूमीकृते, सुखेन उपवेशनार्हतां सम्पादिते इति भावः । भागीरथीपुलिनदेशे गङ्गासैकते ।

(ञ) कृतेति ।—कृतः अनुष्ठितः, यथोचितः यथायोग्यः, उपचारः सत्कारः समादरो वा येषां तान् । गाढं निविडम् । परिरेभे आलिलिङ्ग ।

(ट) हर्षेति ।—हर्षेण आनन्देन, कम्पितं चलितं, पलितं वार्द्धक्यजनित-धवलकेशकलापः यस्मिन् कर्मणि तद्यथा तथा । सवेगं निर्दयं यथा तथेत्यर्थः, उपगूढः आलिङ्गितः ।

प्रीतिसङ्कथासु प्रियवयस्यगणानुयुक्तः (ठ) स्वस्य सोमदत्तपुष्पोद्भवयोश्च चरितमनुवर्ण्य सुहृदां वृत्तान्तं क्रमेण श्रोतुं कृतप्रसङ्गः तान् अपृच्छत्। तेषु प्रथममाह स्म किल अपहारवर्मा।

इति उत्तरखण्डे प्रथमोच्छ्वासः।

## अथ द्वितीयोच्छ्वासः।

## अपहारवर्मचरितम्।

"देव! त्वयि पातालमवतीर्णे त्वदन्वेषणार्थं सुहृत्सु इतस्ततः प्रस्थितेषु अहमपि प्रस्थितः कदाचित् 'अङ्गेषु वहिः चम्पायाः कश्चित् महामुनिरस्ति' इति लोकवादात् (क) अवगम्य तस्मात् भवदुद्देशं (ख) जिज्ञासुः तत्समीपमगमम्, अदर्शञ्च कमपि मलिनकान्तिं तापसम्; अप्राक्षञ्च (ग) तं 'क्वासौ महर्षिः?' इति।

असौ निःश्वस्य अवादीत्, 'भद्र! आसीदत्र महाप्रभावो मुनिः। एकदा काममञ्जरी नाम अत्रत्या काचित् वाराङ्गना सनिर्वेदमुपेत्य (घ) चरणयोस्तस्य अपतत्। क्षणे च तस्मिन् तस्या मातृप्रभृतय आप्तवर्गाः (ङ) समुपस्थिताः। स तु मुनिस्तां समाश्वास्य कारणमपृच्छत्। सा सलज्जविषादगौरवम् (च) अब्रवीत्, 'भगवन्! अहं श्रेयःसाधनाय भवत्पादमूलं

---

(ठ) प्रवृत्तासु आरब्धासु। प्रीतिसङ्कथासु प्रियालापेषु। प्रियेति।—प्रियवयस्यगणैः प्रीतिप्रदमित्रसमूहैः, अनुयुक्तः पृष्टः, ("प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः)।

---

(क) लोकवादात् परस्परमालपतां जनानां वचनात्।

(ख) तस्मात् महामुनेः। भवदुद्देशं तव वृत्तान्तम्।

(ग) अप्राक्षम् अजिज्ञासिषम्, जिज्ञासामकार्षमित्यर्थः।

(घ) सनिर्वेदं सवैराग्यम्। उपेत्य समागत्य।

(ङ) तस्याः काममञ्जर्याः। आप्तवर्गाः आत्मीयसमूहाः।

(च) सलज्जेति।—लज्जया व्रीडया, विषादेन दुःखेन, गौरवेण सम्भ्रमेण

प्रपन्ना' (छ) इति । तस्यास्तु जननी कृताञ्जलिरभाषत, 'भगवन् ! वयं जात्या वेश्याः, अस्याश्च वेश्याया मातुर्मे वेश्योचिताचरणानुशासनं (ज) एनां प्रतीपयति । अयञ्चेदृगाचारः, आजन्म परिमितेन धातुसाम्यकृता वर्णरूपमेधाजननेन (झ) आहारेण प्रतिपालनं, पञ्चमात् वर्षादारभ्य क्रमेण कामशास्त्रशिक्षणं, नृत्यगीतवाद्यनाट्यादिनानाविधासु विलासकलासु उपदेशः, निखिलव्यापारेषु सामान्यज्ञानं, (ञ) द्यूतादिक्रीड़ासु नैपुण्यविधानं, विश्वस्तजनात् प्रथमसुरताभ्यासः, उत्सवादिषु सुसज्जितायाः प्रेषणं, सुलक्षणख्यापनं, नागरिकपुरुषेषु रूपशीलचातुर्यादिप्रस्तावनं, (ट) क्रमेण तरुणजनलक्ष्यीभूतायाः समधिकशुल्केन

---

इत्यर्थः सह वर्त्तमानं यथा तथा, लज्जां विषादं मयि सम्मानञ्च प्रदर्शयन्तीवेत्यर्थः; यद्वा—लज्जायाः विषादस्य च गौरवेण आधिक्येन सह वर्त्तमानं यथा तथा अत्यर्थं लज्जां विषादञ्च अभिनयन्तीवेत्यर्थः, न तु वास्तवी लज्जा वास्तवो वा विषादः, छलनापूर्णत्वात् वेश्याव्यवहारस्य इति भावः ।

(छ) श्रेयःसाधनाय पारत्रिककल्याणलाभाय । प्रपन्ना प्राप्ता, आश्रिता इत्यर्थः ।

(ज) वेश्येति ।—वेश्यायाः वाराङ्गनायाः, उचितं योग्यं, यत् आचरणं व्यवहारः, तस्य अनुशासनम् उपदेशः, वेश्यानुरूपाचारपालनार्थमुपदेशदानमित्यर्थः । प्रतीपयति प्रतिकूलयति, विरक्तीकरोति इत्यर्थः ।

(झ) अयञ्च एषः, आचारः वेश्याव्यवहारः, ईदृक् वक्ष्यमाणरूपः । आ-जन्म जन्मप्रभृति । परिमितेन नातिप्रभूतेन नातिस्वल्पेन इत्यर्थः । धात्विति ।—धातूनां रसरक्तादीनां, साम्यं ह्रासवृद्ध्यभावं, करोति जनयतीति तादृशेन, शारीरधातूनां वैषम्यमकुर्वता इत्यर्थः । वर्णेति ।—वर्णस्य गौरादिदैहिकवर्णस्य, रूपस्य सौन्दर्य्यस्य, मेधायाः स्मृतिशक्तेश्च, जननेन उत्पादकेन ।

(ञ) निखिलव्यापारेषु व्यवहारोपयोगिसर्वविधविषयेषु, सामान्यज्ञानं सङ्क्षिप्ताभिज्ञता ।

(ट) सुलक्षणख्यापनम् "इयमतीव सुलक्षणा सौन्दर्य्यशालिनी" इत्यादिप्रचारीकरणम् । नागरिकपुरुषेषु नगरस्थतरुणविलासिजनेषु, रूपस्य सौन्दर्य्यस्य,

अवस्थापनं, (ठ) भावविलासदर्शनेन मत्तात् जनात् छलेन (ड) बह्वर्थ-ग्रहणं, निःस्वीकृतानां बहिष्करणम्, अर्थदानाक्षमात् धर्माधिकरणे अभियोगेन (ढ) अर्थादानम्, इत्थं बहुधा युवजनवञ्चनम्। अस्याश्च युवजनानां विविधेन बाह्यव्यापारेण मनस्तोषणं न तु सङ्गेन, (ण) सत्यामपि प्रीतौ मातुः शासनेन तथाऽऽचरणमिति। (त)

एवं स्थिते एषा हतभाग्या स्वधर्ममुल्लङ्घ्य कश्चित् आगन्तुके रूप-मात्रधने (थ) विप्रकुमारे स्वेनैव धनेन समासक्ता मासम्मतिवाञ्छितवती, अर्थवन्तं कमपि न आदृतवती, अस्माभिः अर्थागमविरहेण अवसद्यते। (द) 'एषा कुमतिर्न कल्याणी' इति निवारयन्त्यां मयि वनवासाय कोपात् प्रस्थिता इयं यदि न प्रत्यानीयते तदा सर्व एव स्वकुटुम्बवर्गः अनशनेन अत्रैव संस्थास्यति' (ध) इत्यरोदीत्।

---

शीलस्य सद्वृत्तस्य, चातुर्यस्य चतुरतायाः, सर्वकर्मसु दक्षताया इत्यर्थः, प्रस्तावनं प्रसङ्गोत्थापनम्।

(ठ) तरुणजनलक्ष्यीभूतायाः युवजननयनपथवर्त्तिन्याः। समाधिकशुल्केन प्रचुरपणेन, अवस्थापनं नियोगः, संयोजनमिति यावत्, तरुणजनस्येति भावः।

(ड) भावेति।—भावस्य पुरुषाणां मन्मथोद्रेककारणव्यापारविशेषस्य, विलासस्य अङ्गभङ्ग्यादेः, दर्शनेन अवलोकनेन, मत्तात् मोहितात्। छलेन विविधकपटेन।

(ढ) धर्माधिकरणे विचारालये। अभियोगेन व्यवहारानयनेन।

(ण) बाह्यव्यापारेण सुवेशकरणेन चुम्बनाश्लेषादिना हास्यपरिहासापाङ्ग-वीक्षणादिबाह्यभावप्रदर्शनेन। सङ्गेन संसर्गेण, सुरतादिविधानेनेत्यर्थः।

(त) प्रीतौ प्रेमणि, अनुरागे इति यावत्। मातुः शासनेन जनन्याः आदेशेन। तथाऽऽचरणं बाह्यव्यापारेण मनस्तोषणं, न तु सङ्गेनेत्यर्थः।

(थ) एवं स्थिते ईदृशे नियमे वर्त्तमाने। स्वधर्मं वेश्योचितव्यवहारम्। आगन्तुके समागते, भिन्नदेशीये इत्यर्थः, अपरिचिते इति यावत्। रूपेति।—रूपमात्रं केवलं सौन्दर्यमेव, धनं यस्य तादृशे, न तु वित्तशालिनि इति भावः।

(द) अवसद्यते खिद्यते, जीवनधारणोपयुक्ताहाराभावादिति भावः।

(ध) संस्थास्यते मरिष्यते, ("संस्था स्थितिविनाशयोः" इति शाश्वतः)।

अथ तां वाराङ्गनां (न) मुनिरब्रवीत्, 'भद्रे ! वनवासोऽतिदुःखाकरः, फलमस्य मोक्षः स्वर्गो वा, आद्यस्तु प्रकृष्टज्ञानेन साध्यत्वात् प्रायेण दुःसम्पादनीयः। (प) द्वितीयस्तु सर्वस्यैव स्वधर्मानुष्ठायिनः सुलभः ; (फ) तदशक्यादारम्भात् (ब) विरम्य स्वधर्ममनुसर' इति। 'यदि भगवता मे प्रसादो (भ) न क्रियते तदा अहमग्निं प्रवेक्ष्यामि' इतिवादिनीं तां दृष्ट्वा तन्मातरमवदत्, 'सम्प्रति गच्छ गृहं, प्रतीक्षस्व कानिचित् दिनानि, इयं सुकुमाराङ्गी अत्र स्थिता तपःक्लेशमशक्नुवती सोढुम् अचिरेण एव पुनर्गृहाय यथा प्रतिगमिष्यति तथा प्रबोधप्रदानादिना (म) करिष्यामि' इति।

ततः 'तथा' इति तस्याः प्रतियाते स्वजने सा युवतिः तमृषिमलघुभक्ति-र्नात्यादृतशरीरसंस्कारा (य) तरुपोतकालवालपूरणैः देवार्चनकुसुमावचयनैः स्थानसम्मार्जनादिभिश्च (र) शिवपूजार्थं गन्धमाल्यधूपदीपनृत्य-गीतादिभिः एकान्ते (ल) धर्मार्थकामसम्बन्धिभिः आलापैरल्पेनैव कालेन अन्वरञ्जयत्। (व)

---

(न) तां वाराङ्गनां काममञ्जरीम। (प) आद्यः प्रथमः, मोक्षः इति यावत्। प्रकृष्टज्ञानेन उत्तमया विद्यया, ब्रह्मज्ञानेनेत्यर्थः।

(फ) द्वितीयः स्वर्गः। स्वधर्मानुष्ठायिनः निजनिजकालोचितधर्माचरण-शीलस्य। सुलभः अनायासेन प्राप्यः।

(ब) अशक्यादारम्भात् दुःसाध्यादध्यवसायात। (भ) प्रसादः अनुग्रहः।

(म) प्रबोधप्रदानादिना सुबुद्धिजनकसान्त्वनावाक्यादिना।

(य) अलघुभक्तिः अतिशयभक्तिमतीत्यर्थः। नेति।—न अति अतिशयेन, आदृतः कृतादरः, शरीरस्य देहस्य, संस्कारः मार्जनादिव्यापारो यया सा तादृशी, प्रसाधनव्यापारे नात्याग्रहवतीत्यर्थः।

(र) तरुपोतकेति।—तरुपोतकानां नवोद्गतक्षुद्रवृक्षाणाम्, आलवालस्य जल-धारणार्थं मूलस्थितवेष्टनविशेषस्य, पूरणैः जलेन पूर्त्तिकरणैः, जलसेचनैरित्यर्थः। देवार्चनकुसुमावचयनैः देवताराधनार्थं पुष्पसङ्ग्रहैः। स्थानसम्मार्जनादिभिः पूजार्थ-मुपवेशनस्थानस्य प्रक्षालनादिना विशुद्धिसम्पादनादिभिः।

(ल) एकान्ते निर्जने। (व) अन्वरञ्जयत् समतोषयत्, अनुरक्तमकारयदित्यर्थः।

एकदा तं मुनिं रक्तां (अ) विलोक्य सा सस्मितम् अवादीत्, 'मूढोऽयं लोकः यः सह धर्मेण अर्थकामौ गणयति' इति। मुनिः अवोचत्, 'वत्से! कथय केनांशेन अर्थकामातिशायी (ब) धर्मस्तव विदितः?' इति। सा सलज्जम् अभाषत, 'ब्रह्मन्! अस्मात् किल जनात् भगवतस्त्रिवर्गबलाबलज्ञानं (स) नैव सम्भवति, अथवा एषः अनुग्रहप्रकारो दास्याः; तत् श्रूयतां, धर्मो हि अर्थकामयोः प्रभवः, स तु तदनपेक्ष एव, (ह) अर्थः कामश्च धर्मेण बाध्यते, (क) स तु तत्त्वदर्शनोपबृंहितः कथञ्चित् सेविताभ्यामाभ्यां (ख) न बाध्यते, बाधितोऽपि अल्पायासेनैव प्रतिसमाधीयते। (ग) तथा हि, भवानीपतेः मुनिपत्नीसहस्रसन्दूषणेन, (घ) पितामहस्य तिलोत्तमाभिलाषेण, (ङ) विष्णोः व्रजाङ्गनाविहारेण,

---

(अ) रक्ताम् अनुरागिणम्। (ब) अर्थेति।—अर्थः धनं, कामः अभिलाषः, भोगवासनादिरिति यावत्, तौ अतिशेते अतिक्रम्य वर्त्तते इति तादृशः, अर्थकामापेक्षया आधिकत्वेनाभिमतः।

(स) अस्मात् मादृशात् वेश्याजनात्। भगवतः षडैश्वर्य्यशालिनः महाप्रभावस्य भवतः। त्रिवर्गेति।—त्रयाणां धर्मार्थकामानां, वर्गः समूहः, तस्य बलाबलयोः उत्कर्षापकर्षयोः, ज्ञानं ज्ञातुमिच्छा इत्यर्थः।

(ह) प्रभवः उत्पत्तिस्थानं, कारणमित्यर्थः, धर्मादृते अर्थकामौ नैव लभते जन इति भावः। सः धर्मः। तदनपेक्षः अर्थकामनिरपेक्षः, धर्मार्जने अर्थकामयोः किमपि प्रयोजनं नास्तीत्यर्थः।

(क) बाध्यते पीड्यते, बाधां प्राप्नोतीत्यर्थः।

(ख) स धर्मः। तत्त्वेति।—तत्त्वदर्शनेन पारमार्थिकज्ञानेन, उपबृंहितः वर्द्धितः। आभ्याम् अर्थकामाभ्याम्।

(ग) अल्पायासेन स्वल्पेनैव प्रयत्नेन। प्रतिसमाधीयते प्रतिक्रियते, प्रतीकारं कर्त्तुं शक्यते इत्यर्थः।

(घ) भवानीपतेः शिवस्य। मुनीति।—मुनिपत्नीनाम् ऋषिभार्य्याणां, सहस्रस्य सन्दूषणेन दोषोत्पादनेन, सतीत्वनाशनेनेत्यर्थः।

(ङ) पितामहस्य ब्रह्मणः, तिलोत्तमाभिलाषेण तिलोत्तमानामाप्सरसं प्रति कामोद्रेकेण।

प्रजापतेः स्वदुहितरि (च) प्रणयेन, देवराजस्य गुरुदाराभिगमनेन, (छ) चन्द्रमसो गुरुपत्नीहरणेन, (ज) सूर्य्यस्य बड़वालङ्घनेन, (झ) अनिलस्य अञ्जनागमनेन, (ञ) बृहस्पतेर्ज्येष्ठभार्य्याऽभिसरणेन, (ट) पराशरस्य योजनगन्धागमनेन, (ठ) व्यासस्य भ्रातृदारसङ्गत्या, (ड) अत्रेः मृगीसमागमेन (ढ) च समुत्पन्नं धर्मपीड़नमचिरेणैव अग्निपतितम् इन्धनमिव (ण) दह्यते। देवानाञ्च तेषु तेषु कार्य्येषु असुरविप्रलम्भनानि (त) ज्ञानप्रभावात् न धर्मं पीड़यन्ति ; तत् मन्ये, धर्मो न अर्थकामयोः समानः, प्रत्युत तदतिशायी' इति।

---

(च) प्रजापतेः विधातुः. स्वदुहितरि निजतनयायां, सरस्वत्यामित्यर्थः।

(छ) देवराजस्य इन्द्रस्य, गुरुदाराभिगमनेन गुरोः गौतमस्य, दारेषु भार्य्यायामहल्यायाम्, अभिगमनेन सहवासेन।

(ज) गुरुपत्नीहरणेन गुरोः बृहस्पतेः, पत्न्याः भार्य्यायाः तारायाः, हरणेन अपहरणपूर्वकसहवासेनेत्यर्थः।

(झ) बड़वालङ्घनेन बड़वायाः अश्वीरूपायाः संज्ञायाः, लङ्घनम् आक्रमणं, बलपूर्वकसहवास इत्यर्थः।

(ञ) अनिलस्य वायोः, अञ्जनागमनेन अञ्जनायां केशरीनामकवानरविशेषस्य भार्य्यायां, गमनेन तया सह सुरतसम्भोगेन इत्यर्थः।

(ट) ज्येष्ठेति।—ज्यष्ठस्य उतथ्यनामकज्येष्ठभ्रातुः, भार्य्यायां पत्न्याम्, अभिसरणेन अभिगमनेन।

(ठ) योजनगन्धायाः मत्स्यगन्धाख्याया दासराजकन्यकायाः, गमनेन कुमारीधर्मनाशनेनेति यावत।

(ड) भ्रातृदारसङ्गत्या भ्रातुर्विचित्रवीर्य्यस्य, दारेषु अम्बिकाऽम्बालिकाख्यभार्य्ययोः, सङ्गत्या सहवासेन।

(ढ) अत्रेः तन्नामकमुनेः, मृगीसमागमेन कयाचित हरिण्या सह सङ्गमेन।

(ण) धर्मपीड़नं धर्मलङ्घनम्, अधर्माचरणमित्यर्थः। इन्धनं काष्ठम्। दह्यते भस्मीभूयते, ज्ञानाग्निना धर्मलङ्घनजनितपापं भस्मीभवति इत्यर्थः।

(त) तेषु तेषु कार्य्येषु समुद्रमन्थनोत्पन्नामृतविभागादिव्यापारेषु इत्यर्थः। असुरविप्रलम्भनानि दैत्यानां प्रतारणानि।

श्रुत्वैतदृषिः उद्दीप्तरागः (थ) अब्रवीत्, 'अयि विलासिनि ! साधु उक्तं त्वया, तत्त्वदर्शिषु अधर्मो न स्थानमाप्नोतीति। परम् आ-जन्मनः अर्थकामयोः अनभिज्ञा वयं, तदाचक्ष्व, किं-स्वरूपावेतौ ? किं-फलौ ? किं-परिवारौ ? (द) कथं वा ज्ञेयौ ?' इति। सा अवोचत्, 'ब्रह्मन् ! अर्थः तावत् अर्जनवर्द्धनरक्षणात्मकः, कृषिपाशुपाल्यवाणिज्यसन्धिविग्रहादि-परिवारः, तीर्थप्रतिपादनफलश्च। (ध) कामश्च विषयातिसक्तचेतसोः (न) स्त्रीपुंसयोर्निरतिशयसुखस्पर्शविशेषः, परिवारस्तस्य यावदिह (प) रम्यमुज्ज्वलञ्च, फलं पुनः परमाह्लादनं परस्परविमर्दजन्म। (फ) एतदर्थमेव जनाः कष्टानि तपांसि महान्ति दानानि युद्धानि समुद्रलङ्घनादीनि समाचरन्ति' इति।

निशम्यैतत् स मुनिः स्वनियममनादृत्य तस्यां प्रासजत्। (ब) स तु अतिप्रमत्तं तं प्रवहणेन (भ) आरोप्य राजमार्गेण स्वभवनमनैषीत् अघोषयच्च 'श्वः कामोत्सवः' इति। परेद्युश्च तं मुनिं कामिजनवत् सुसज्जि

(थ) उद्दीप्तेति।—उद्दीप्तः उद्रिक्तः, प्रवृद्ध इत्यर्थः, रागः तां प्रति अनुरा यस्य तादृशः।

(द) किं-स्वरूपौ ? किमात्मकौ ? एतौ अर्थकामौ। किं-फलौ ? अर्थकाम र्जने किं फलं भवति ? किं-परिवारौ ? केन विधानेन अनयोरागमो भवति इत्यर्थः।

(ध) तीर्थेति।—तीर्थेषु पात्रेषु, सत्पात्रेषु इत्यर्थः, ("अवतारे विदुस्त्त पात्रोपाध्यायमन्त्रिषु" इति शाश्वतः) प्रतिपादनं दानमित्यर्थः, फलं परिणा यस्य तादृशः।

(न) विषयेति।—विषयेषु स्रक्चन्दनवनितादिषु भोगसाधनेषु, अतिस अत्यन्तानुरक्तं, चेतो मनः ययोः तादृशयोः।

(प) परिवारः पोषकः, वर्द्धक इत्यर्थः। इह अस्मिन् संसारे।

(फ) परस्परविमर्दजन्म अन्योऽन्यालिङ्गनघर्षणादिसम्भूतम्।

(ब) स्वनियमं निजव्रतं, ब्रह्मचर्यादिरूपमित्यर्थः। अनादृत्य उपे परित्यज्येत्यर्थः। प्रासजत सक्तोऽभवत्।

(भ) अतिप्रमत्तम अत्यर्थं प्रमादग्रस्तं, स्वनियमं परित्यज्य वेश्यायामत्यासक्त

नितान्तरक्ताम् उत्सवसमाजं (म) नीत्वा युवतिशतवृतस्य राज्ञः पुरतः समुपतस्थे। तेन च हसता 'भगवता सह निषीद' (य) इति समादिष्टा सविभ्रमकृतप्रणामा (र) निषसाद। तत्र काचित् युवतिरुत्थाय कृताञ्जलिरभाषत, 'देव! जिताऽहमनया, अद्य प्रभृति अस्या दासी संवृत्ताऽस्मि' इति राजानं प्रणनाम; अभूच्च सविस्मयं महान् कोलाहलः। ततश्च हृष्टेन राज्ञा सत्कृता सा वाराङ्गनाभिः पौरैश्च प्रशस्यमाना (ल) तमृषिमभाषत, 'भगवन्! अयमञ्जलिः, चिरमनुगृहीतोऽयं दासजनः, स्वार्थं (व) इदानीमनुष्ठेयः' इति। स तु नितरामनुरक्तोऽशनिहत इव उद्भ्राम्य (श) अब्रवीत्, 'प्रिये! किमेतत्? कुतस्ते एतादृगौदासीन्यम्? (ष) क्व गतस्ते मय्यनुरागः?' इति। सा सस्मितम् अवोचत्, 'ब्रह्मन्! यया अद्य राजसमीपे मत्तः पराजयोऽभ्युपेतः, तस्या मम च कस्मिंश्चित् सङ्घर्षे 'मरीचिमावर्जितवतीव श्लाघसे' इति तया साधिक्षेपम् (स) उक्ताऽस्मि, दास्यपणबन्धेन अस्मिन् अर्थे प्रावर्त्तिषि, सिद्धार्था (ह) च अस्मि भवत्प्रसादतः' इति।

---

अत्यर्थं मूढमित्यर्थः। प्रवहणेन कर्णीरथेन, स्त्रीगमनोचितवस्त्राच्छादितयानविशेषेणेत्यर्थः। ("कर्णीरथः प्रवहणम्" इत्यमरः)

(म) उत्सवसमाजं कामोत्सवार्थसज्जितसभाम्।

(य) भगवता मारीचेन। सोपहासोक्तिरियम्। निषीद उपविश।

(र) सेति।—सविभ्रमं सविलासं, कृतः सम्पादितः, प्रणामः नतिः यया तादृशी।

(ल) सत्कृता समादृता। पौरैः नागरिकजनैः। प्रशस्यमाना श्लाघ्यमाना; प्राप्तप्रशंसेत्यर्थः।

(व) स्वार्थः स्वप्रयोजनं, तप इत्यर्थः। (श) अशनिहत इव वज्रताडित इव। उद्भ्राम्य उद्भ्रान्तो भूत्वा, उन्मत्तवत् ज्ञानशून्यो भूत्वेत्यर्थः।

(ष) औदासीन्यम्? उपेक्षा?। (स) सङ्घर्षे परस्परविवादे, परस्परस्पर्द्धाकरणे इत्यर्थः। आवर्जितवतीव आयत्तीकृतवतीव, वशीकृतवतीव इत्यर्थः। श्लाघसे विकत्थसे, आत्मप्रशंसां करोषीत्यर्थः। साधिक्षेपं सतिरस्कारं, सावज्ञमित्यर्थः।

(ह) दास्येति।—दास्यमेव "यद्यहं मरीचिं वशीकर्त्तुं प्रभुर्न तदा कः

इत्थमवधूतः तया स मुनिः कृतानुशयः (क) शून्यवत् न्यवर्त्तिष्ट। यस्तयैवं कृतः, तमेव मां मन्यस्व। अचिरादेव त्वदर्थसाधनक्षमो भवितुं यते, (ख) अस्यामेव पुर्य्यां तावत् वस' इति।

अस्मिन्नेवान्तरे रविः अस्तमगात्। कृतसन्ध्योपासनश्च तं मुनिमनुमान्य (ग) तत्रैव कथञ्चित् नीतरात्रिः प्रभाते नगराय प्रातिष्ठे, (घ) अपश्यञ्च नगरसविधे रक्ताशोकतरुतले निषण्णम् अतिविरूपं विषादपूर्णं कमपि क्षपणकम्, (ङ) अप्राक्षञ्च तदन्तिकोपविष्टः तस्य आधिकारणम्। (च) सोऽब्रवीत्, 'सौम्य! अहमस्यां चम्पायां निधिपालितनामकस्य श्रेष्ठिनो ज्येष्ठसूनुर्वसुपालितो नाम, वैरूप्यात् तु विरूपक इति प्रसिद्धः। अन्यश्च अत्र सुन्दरक इति यथार्थनामा कलागुणैः समृद्धो वसुना नातिपुष्टः (छ) अभूत्। रूपधनाभ्यां निमित्ताभ्यां तस्य मम च वैरं धूर्त्तैरुदपाद्यत। ते निरधारयन् 'रूपं धनं वा न पुंस्त्वमूलम्, (ज) अपि तु परमसुन्दरी नारी यं कामयते स एव पुमान्;

पणो देयः?" इत्युक्ते मयि सा "तव दासी भविष्यामि, परन्तु अकृतकार्य्यायां त्वयाऽपि अवश्यमेव मे दासीत्वं कार्य्यम्" इत्येवं, पणः तस्य बन्धनेन दृढनियमेन इत्यर्थः। अस्मिन् अर्थे तवार्जनविषये। प्रावर्त्तिषि प्रवृत्ता अभूवम्। सिद्धार्था सफलप्रयोजना।

(क) अवधूतः परित्यक्तः इत्यर्थः। कृतानुशयः सञ्जातानुतापः, निजाविमृश्यकारिताचरणेन अनुतप्त इत्यर्थः। ("अथानुशयो दीर्घद्वेषानुतापयोः" इत्यमरः)।

(ख) त्वदिति।—तव भवतः, अर्थः प्रयोजनं, सुहृदो गतिनिर्णयरूपं कार्य्यमित्यर्थः, तस्य साधने सम्पादने, क्षमः समर्थः। यते चेष्टे, प्रयत्नं करोमीत्यर्थः।

(ग) अनुमान्य स्वीकृत्य इत्यर्थः, तद्वचनानुसारेण चम्पायामवस्थातुं स्वीकृत्येति भावः।

(घ) प्रातिष्ठे अगच्छम्। ("समवप्रविभ्यः स्थः" इति प्र-पूर्वकात् स्थाधातोरात्मनेपदम्)।

(ङ) नगरसविधे नगरसमीपे। क्षपणकं दिगम्बरं बौद्धसन्न्यासिनम्।

(च) आधिकारणं मनोव्यथायाः हेतुम्। ("पुंस्याधिर्मानसी व्यथा" इत्यमरः)।

(छ) यथार्थनामा सार्थकनामा, अतिशयेन सुन्दर इत्यर्थः। वसुना धनेन, नातिपुष्टः नातिस्फीतः, अल्पधन इत्यर्थः।

(ज) ते धूर्त्ताः। निरधारयन् निश्चयमकारयन्। पुंस्त्वमूलं पौरुषकारणम्।

अतो युवतिललामभूतया काममञ्जर्या यः प्रार्थ्यते स एव सुभगपताकां (झ) लभताम्' इति। आवाञ्च 'तथा' इति तस्यै दूतं प्राहिणुव, (ञ) आगतायाश्च तस्याः स्मरोन्मादहेतुरहमेवासम्। सुभगेन च मया स्म स्वधनजीवनयोरधीश्वरीकृता, तया च अहं कृतः कौपीनशेषः। (ट) ततश्च लोकोपहास्यतामेत्य इह जैनायतने (ठ) केनचित् जैनेन समुपदिष्टमोक्ष-वर्त्मा 'सुकर एष वेशो वेशविनिर्गतानाम्' (ड) इति जातवैराग्यः तदपि कौपीनमत्यजम्। 'मम एतत् निन्द्यवेशं निरयफलं विप्रलम्भप्राय-मधर्मवर्त्म धर्मवत् समाचरणीयम्' इति प्रत्याकलयन् विविक्तम् (ढ) एतदासाद्य दुःखेन रोदिमि' इति।

श्रुत्वा चैतत् 'तिष्ठ कञ्चित् कालं यथा असौ वेश्या त्वां निज-धनेन योजयिष्यति तथा यतिष्ये' इति तमाभाष्य प्रस्थितोऽहं नगरमाविशन्नेव लोकवादात् 'धूर्तसमृद्धपूर्णं पुरम्' (ण) इति विदित्वा अर्थानां नश्वरत्वं प्रदर्श्य प्रकृतिस्थान् अमून् (त) विधास्यन् तस्करवृत्तौ मतिमाधाय द्यूतसमाजम् (थ) अगमम्। तैश्च सङ्गत्य तेषां द्यूतक्रीडासु

(झ) सुभगपताकां सुभगस्य युवतीजनरञ्जकत्वात् नारीवाल्लभ्यस्य, पताकां केतुरूपचिह्नविशेषम्।

(ञ) तस्यै काममञ्जर्यै। प्राहिणुव प्रेरितवन्तौ।

(ट) कौपीनशेषः सर्वधनशोषणेन चीरखण्डमात्रावशिष्टः।

(ठ) जैनायतने जैनानां जिनोपासकानां बौद्धानां वा, आयतने आवासे, मठे इति यावत्।

(ड) वेशविनिर्गतानां वेश्यालयात् बहिष्कृतानाम्। ("वेशो वेश्याजनाश्रयः" इत्यमरः)।

(ढ) निरयफलं नरकजनकम्। विप्रलम्भप्रायं वञ्चनाबहुलम्। प्रत्याकलयन् विवेचयन्। विविक्तं निर्जनम्।

(ण) धूर्तेति।—धूर्तैः वञ्चकैः, समृद्धैः धनिभिः, पूर्णं व्याप्तम्। पुरं चम्पापुरीम्।

(त) प्रकृतिस्थान् स्वभावस्थान्, धूर्त्ततां त्याजयित्वा सदाचारसम्पन्नान् इत्यर्थः। अमून् धूर्त्तसमृद्धान् पौरान्।

(थ) द्यूतसमाजं द्यूतगोष्ठीं, पणस्थापनपूर्वकपाशकक्रीडास्थानमित्यर्थः।

नानाविधं कौशलं विदित्वा कश्चित् अनभिज्ञो कितवो (द) प्राहसत्। प्रतिकितवस्तु (ध) सकोपं रक्तचक्षुर्मामभिवीक्ष्य 'शिक्षयसि रे! द्यूतकर्म हास्यव्याजेन? आस्तामयमशिक्षितो वराकः, त्वयैव तावत् विचक्षणेन देविष्यामि' (न) इति अभिधाय द्यूताध्यक्षानुमत्या मया सह देवितुमासजत्। (प) मया च षोड़शसहस्राणि दीनाराणां तस्मात् जित्वा अर्द्धं द्यूताध्यक्षाय सभ्येभ्यश्च दत्त्वा उदतिष्ठम्। सर्वे च तत्रत्याः सहर्षं मां प्रशशंसुः। द्यूताध्यक्षानुरोधात् च तदहः तदागारे विविधद्रव्यमभ्यवहरन् (फ) अतिष्ठम्। यन्मूलश्च मे द्यूतावतारः, स मे विमर्दको नाम विश्वास्यतरं (ब) द्वितीयं हृदयमासीत्। तन्मुखेन च सर्वमेव नगरवृत्तान्तमवगम्य तमिस्रायां (भ) निर्गत्य तस्करोचितविविधोपकरणयुक्तः कस्यचित् लुब्धेश्वरस्य (म) गेहे सन्धिं छित्त्वा प्रभूतं धनमादाय निर्गच्छन् घोरान्धकारसमावृतायां राजवीथ्यां झटिति शतह्रदासम्पातमिव (य) क्षणमालोकमलक्षयम्। अथासौ नगरदेवता इव नगरमोषरोषिता निःसम्बाधवेलायां (र) निःसृता काचित् युवतिः सर्वालङ्कार-

---

(द) कितवे धूर्त्ते, अक्षदेविनि इत्यर्थः। ("धूर्त्तोऽक्षदेवी कितवोऽक्षधूर्त्तः द्यूतकृत्समाः" इत्यमरः)।

(ध) प्रतिकितवः प्रतिद्वन्द्वी अक्षदेवी।

(न) वराकः दीनः, क्रीड़ानभिज्ञत्वात् कृपापात्र इति यावत्। देविष्यामि क्रीडिष्यामि, पाशकमिति शेषः।

(प) आसजत् प्रसक्तोऽभवत, प्रवृत्तोऽभवदित्यर्थः।

(फ) तदागारे द्यूताध्यक्षस्य भवने। अभ्यवहरन् भक्षयन्।

(ब) द्यूतावतारः पाशकक्रीड़ायामवतरणं, पाशकक्रीड़ायां प्रवृत्तिरित्यर्थः। विश्वास्यतरम् अतिशयेन विश्वासभाजनम्।

(भ) तमिस्रायां तामस्यां रात्रौ, अन्धकारनिशायाम् इत्यर्थः, ("तमिस्रा तामसी रात्रिः" इत्यमरः)।

(म) लुब्धेश्वरस्य लुब्धानाम् अर्थलोभिनाम्, ईश्वरस्य श्रेष्ठस्य, कृपणस्येत्यर्थः।

(य) शतह्रदासम्पातमिव विद्युत्स्फुरणमिव।

(र) नगरदेवता इव नगराधिष्ठात्री देवीव। नगरेति।—नगरस्य नगर-

भूषिता सन्निकृष्टा आसीत् । 'कासि वासु !? क्व यासि ?' इति मया सदयमुक्ता सा सत्रासगद्गदमगदत्, 'आर्य्य ! पुर्य्यामस्यां कुबेरदत्तो नाम वसति वैश्यश्रेष्ठः । तस्य अहं कन्या । मां जातमात्रां धनमित्रनाम्ने अवत्याय कस्मैचित् धनिकपुत्राय भार्य्यात्वेन प्रतिज्ञातवान् मे पिता । स तु धनमित्रः पित्रोरन्ते अत्युदारतया स्वधनैः क्रीत्वेवार्थिवर्गात् दारिद्र्यं (ल) दरिद्रति सति 'उदारकः' इति प्रीतलोकाधिरोपितापरश्लाघ्य-नामनि (व) च मां तरुणीभूतां वरयति एव 'अधनः' (श) इति अदत्त्वा अर्थपतिनाम्ने अपरस्मै यथार्थनाम्ने सार्थवाहाय पुनर्दित्सति (ष) पिता । तस्यामङ्गलस्य अद्य प्रभाते भावित्वात् प्रागेव प्रियतमदत्तसङ्केता वञ्चितस्वजना निर्गत्य बाल्याभ्यस्तेन वर्त्मना तद्गृहमभिसरामि, (स)

---

वासिनाम् अर्थस्य इति भावः, मोषेण अपहरणेन, रोषिता कोपिता । निःसम्बाध-वेलायां सङ्कटशून्यकाले, निर्जनसमये इत्यर्थः ।

(ल) पित्रोरन्ते मातापित्रोर्देहावसाने । अत्युदारतया अतिशयदातृत्वेन हेतुना । ("उदारो दातृमहतोः" इत्यमरः) । अर्थिवर्गात् याचकसमूहात् । स्वधनैः क्रीत्वेव दारिद्र्य तेभ्यः स्वधनं दत्त्वा तेषां दारिद्र्यं गृहीत्वेवेत्यर्थः ।

(व) उदारः दाता एव इति उदारकः । (स्वार्थे कन्) । प्रीतेति ।—प्रीतैः तस्य दातृत्वेन हृष्टैः, लोकैः नगरवासिभिः, अधिरोपितं दत्तमित्यर्थः, अपरं धन-मित्रादन्यत्, श्लाघ्यं प्रशंसनीयं, नाम संज्ञा यस्य तादृशि ।

(श) वरयति भार्य्यात्वेन वरणार्थं प्रार्थयमाने सति । अधनः दरिद्रः ।

(ष) यथार्थनाम्ने अर्थपतिरिति सार्थकनामधारिणे । सार्थवाहाय वणिजे । दित्सति दातुमिच्छति ।

(स) अमङ्गलस्य अशुभस्य, बाल्यात् प्रभृति वाग्दत्तं पतिं परित्यज्य पत्यन्तर-ग्रहणरूपस्य अप्रियव्यापारस्येत्यर्थः । प्रियेति ।—प्रियतमेन अतिशयप्रीतिपात्रेण धन-मित्रेण, यद्वा—प्रियतमेन भर्त्रा, बाल्यावधिपतिभावेन चिन्तनादिति भावः, ("धवः प्रियः पतिर्भर्त्ता" इत्यमरः) दत्तः प्रेरितः, सङ्केतः अभिसरणार्थमिङ्गितः यस्यै तादृशी, यद्वा—प्रियतमाय दत्तः सङ्केतो यया तादृशी । वञ्चिताः प्रतारिताः, उपेक्षिता इति यावत्, स्वजनाः पित्राद्यात्मीयवर्गाः यया तादृशी । बाल्याभ्यस्तेन शैशवावधि गमनागमनवशात् परिचितेन । अभिसरामि कान्तार्थिनी सती गच्छामीत्यर्थः ।

तन्मां मुञ्च, गृहाण एतदलङ्कारजातम्' इति उन्मुच्य मह्यम् अर्पितवती। सदयमब्रवं ताम्, 'एहि साध्वि! नयेयं (छ) त्वां त्वत्प्रियतमावासम्' इति त्रिचतुराणि पदानि अगच्छम्।

अत्रान्तरे सहसा नागरिकबलं दीपिकाऽऽलोकध्वस्ततिमिरमनल्पं यष्टिकृपाणपाणि (क) समापतत्। कम्पमानां कन्यकामवदं, 'भद्रे! मा भैषीः, अस्त्ययमसिर्द्वितीयो बाहुः। परं त्वदर्थं मृदुतरमुपाय उद्भावितः, अहं सर्पदष्ट इव शये, त्वया अमी (ख) वाच्याः, 'भद्राः! निशि वयमिमां पुरीं प्रविष्टाः, ममैष पतिर्भुजङ्गदष्टः, यदि वः (ग) कश्चिन्मन्त्रवित् कृपालुरेनं जीवयेत् तदाऽहमनाथा जीवामि' इति। साऽपि बाला उपायान्तरमपश्यन्ती रुदती तथैवान्वतिष्ठत्। तेषु कश्चित् विषवैद्याभिमानी मां निर्वर्ण्य मुद्रातन्त्रादिभिरुपायैरुपक्रम्य अकृतार्थः (घ) 'गत एवायं कालदष्टः, शुचा अलं बाले! श्वोऽग्निसात् (ङ) करिष्यामः, कोऽतिवर्तते दैवम्?' इति सहेतरैः प्रायात्।

अहञ्चोत्थितः उदारकाय तां नीत्वा अवोचं, 'भद्र! अहमस्मि कश्चित्तस्करः, त्वद्गतेन मनसा त्वामभिसरन्तीमेनामन्तरे (च) प्राप्य त्वत्समीपमुपानैषम्। इदञ्चास्या अलङ्कारजातम्'' इति तत् सर्वमर्पितवान्।

---

(छ) नयेयं प्रापयेयम्।

(क) नागरिकबलं नगररक्षिसैन्यं, प्रहरिकसमूहः इत्यर्थः। दीपिकेति।—दीपिकानां प्रदीपानाम्, आलोकेन प्रभया, ध्वस्तं विनाशितं, तिमिरम् अन्धकारो येन तादृशम्। अनल्पं बहु। यष्टिकृपाणपाणि दण्डखड्गहस्तम्।

(ख) मृदुः कोमलः, युद्धादिहिंसाविरहात् शान्तिपूर्ण इत्यर्थः। शये शयनं करोमि। अमी नगररक्षिवर्गाः।

(ग) वः युष्माकं मध्ये। (घ) विषवैद्याभिमानी 'अहं सर्पविषचिकित्सां जानामि' इति अहङ्कारवान्। मुद्रेति।—मुद्रा कराङ्गुलिसञ्चालनविशेषः, तन्त्रं विषवेगोपशमार्थमरिष्टाबन्धनाद्युपायविशेष इत्यर्थः, तदादिभिः तत्प्रभृतिभिः। उपक्रम्य चिकित्सां कृत्वा, ("उपक्रमस्तूपधायां ज्ञात्वाऽऽरम्भे च विक्रमे। चिकित्सायाम्" इति मेदिनी)। अकृतार्थः अकृतकार्यः, विफलप्रयत्नः सन् इत्यर्थः।

(ङ) अग्निसात् अग्नये देयं, करिष्यामः भस्मीकरिष्यामः।

(च) अन्तरे मध्ये, मार्गमध्ये इत्यर्थः।

स च तदादाय लज्जाहर्षसम्भ्रमसमन्वितः प्राब्रवीत्, 'आर्य्य! नाहं किमपि वक्तुं जानामि; यदद्य त्वया कृतं तस्य निष्क्रयो नास्ति, नैतादृशं केनापि कृतपूर्वं (छ) नापि क्रियते न च करिष्यते, तदिदानीम् एतावदेव वाच्यं यदद्य प्रभृति भर्त्तव्यः (ज) अयं दासजनः' इति मम पादयोरपतत्।

अहञ्चोत्थाप्य तं गाढ़माश्लिष्याब्रवं, 'भद्र! काऽद्य ते प्रतिपत्तिः?' (झ) इति। सोऽभ्यधत्त, 'सौम्य! न शक्नोमि अनेनाऽत्र नगरे पितुरनुज्ञया विना उपयम्य जीवितुम्, अतोऽस्यामेव रजन्यां देशमिमं त्यजामि। अथवा को वा अहम्? यथा तुभ्यं रोचते' इति। (ञ) मयोक्तं, 'स्वदेशो विदेशो वेति नेयं गणना विदग्धस्य, किन्तु बाला अनल्पसौकुमार्य्येयं, कष्टाः विघ्नबहुलाश्च कान्तारपथाः, (ट) ईदृशेन देशत्यागेन अनर्थकरेण प्रज्ञासत्त्वयोः शैथिल्यमिव (ठ) प्रतिभाति। तत् सहैवानया अत्र नगरे सुखं वस्तव्यम्। एहि, नयावैनां स्वमावासम्' इति। तेन च अविचार्य्यैव अनुमोदमानेन सद्य एव तां स्वगृहं नीत्वा तयैवापसर्पभूतया (ड)

---

(छ) निष्क्रयं प्रतिदानमिति भावः। कृतपूर्वं कृतम् अनुष्ठितं, पूर्वं प्राक् यत् तादृशं, पूर्वं कृतम्। (ज) भर्त्तव्यः पालयितव्यः।

(झ) भद्र! साधो!। प्रतिपत्तिः? निश्चयः? इदानीं कर्त्तव्यतया किं निश्चिनोषि? इत्यर्थः।

(ञ) तुभ्यं तव इत्यर्थः, ("रुच्यर्थानां प्रीयमाणः" इति चतुर्थी) रोचते स्पृहयति, तव या इच्छा तदेव भविष्यति, ममात्र किमपि वक्तव्यं नास्तीति भावः।

(ट) विदग्धस्य पण्डितस्य, कालज्ञस्येत्यर्थः, चतुरस्य वा। अनल्पसौकुमार्य्या अतिशयेन कोमलाङ्गी। कान्तारपथाः आरण्यमार्गा दुर्गममार्गा वा। ("कान्तारोऽस्त्री महारण्ये बिले दुर्गमवर्त्मनि" इति मेदिनी)।

(ठ) प्रज्ञासत्त्वयोः बुद्धिबलयोः। शैथिल्यमिव ह्रास इव, अभाव इवेति यावत्।

(ड) स्वगृहं तस्याः निजभवनं, पित्रालयमित्यर्थः। तदेव उक्तया युवत्या एव। अपसर्पभूतया चरस्वरूपया, ("अपसर्पश्चरः स्पशः" इत्यमरः)।

तत्पितृगृहे सर्वं द्रव्यजातं, तदनन्तरमर्थपतिभवनं गत्वा तत्रत्यं सर्वस्वं चोरयित्वा स्वगृहं गत्वा शयनमशिश्रियाव। (ढ)

ततश्चोदिते भगवति गभस्तिमालिनि मिहिरे उत्थाय आवां धौतवस्त्रौ प्रातःकृत्यमनुष्ठाय अस्मत्कर्मतुमुलं नगरमनुविचरन्तौ वरवधूगृहेषु (ण) कोलाहलमशृणुव। अथ धैः कुबेरदत्तमाश्वास्य तत्कन्याविवाहं मासावधिकमकल्पयत्। (त) अत्रान्तरे धनमित्रमहमशिक्षयं, 'सखे! चर्मरत्नभस्त्रिकामेकां कल्पयित्वा एकान्ते (थ) राजानम् अङ्गराजमाचक्ष्व, 'जानात्येव देवो महाधनस्य वसुमित्रस्य पुत्रं धनमित्रं मां, मयि अर्थनाशात् दरिद्रे मदर्थमेव संवर्द्धितां कुलपालिकां नाम कन्यां तत्पिता कुबेरदत्तः अर्थपतये दित्सतीति ज्ञात्वा वैराग्यात् प्राणान् विहातुं जरद्वनं गत्वा कण्ठन्यस्तशस्त्रः केनापि कृपालुना जटाधरेण (द) निवार्य्य एवमुक्तः, 'किमिति अकार्य्यं क्रियते?' इति। मयोक्तं, 'लोकावमानसोदर्य्यात् (ध)

---

(ढ) अर्थपतिभवनं येन सह कुबेरदत्तः तनयाया वैवाहिकसम्बन्धमकार्षीत् तस्य गृहम्। अशिश्रियाव आश्रितवन्तौ।

(ण) गभस्तिमालिनि किरणमालिनि। मिहिरे सूर्य्ये। अस्मदिति।—अस्माकं कर्मणा चौर्य्यव्यापारेण, तुमुलं व्याकुलं, भयाकुलमिति यावत. ("तुमुलं व्याकुले रणे" इति विश्वाख्यशेषः) वरेति।—वरस्य अर्थपतेः, वध्वाः भाविवधूशब्दवाच्यायाः, कुमार्य्याः कुलपालिकाया इत्यर्थः, गृहेषु भवनेषु, कुबेरदत्तभवने इति भावः।

(त) मासेति।—मासः अवधिः सीमा यस्य तथोक्तं, मासैकाभ्यन्तरे यस्मिन् कस्मिन् दिने कर्त्तव्यमित्यर्थः। अकल्पयत निरधारयत।

(थ) चर्मरत्नभस्त्रिकां चर्मनिर्मितरत्नरक्षणपेटिकाम्। कल्पयित्वा निर्माय। एकान्ते निर्जने।

(द) जरद्वनं जीर्णोद्यानं, पुरातनत्वात् लोकसञ्चारविरहेण निर्जनं ध्वंसोन्मुख-मुपवनमिति यावत। कण्ठेति।—कण्ठे गलदेशे, न्यस्तं स्थापितं, शस्त्रं छुरिका येन तादृशः, अहमिति शेषः। केनापि अपरिचितेनेत्यर्थः। जटाधरे जटिलतपस्विना।

(ध) लोकेति।—लोके जगति, जनसमाजे वा, अवमानः अवहेला एव सोदर्य्यः सहोदरः यस्य तस्मात, सोदरभ्रातृद्वयं यथा एकत्रैव तिष्ठति तथा दारिद्र्यावमानावपि इत्यतः दारिद्र्यस्य अवमानसोदर्य्यत्वमिति भावः।

दारिद्र्यात्।' स पुनरब्रवीत्, 'मूढोऽसि, नान्यत् पापतममात्मघातात्, आत्मानमात्मनैव अनवसाद्योद्धरन्ति सन्तः, (न) सन्त्युपाया बहवो धनार्जनस्य नैकोऽपि छिन्नकण्ठप्रतिसन्धानस्य। (प) मया मन्त्रबलेन एका चर्मरत्नभस्त्रिका लक्षग्राहिणी (फ) अधिगता, तामिमां दयमानस्तुभ्यं ददामि, प्रतिगृहाण, मदन्यत्र चेयं वणिग्भ्यो वाराङ्गनाभ्यश्च दुग्धे; किन्तु यत्सकाशादन्यायापहृतं तत्तस्मै प्रत्यर्पणीयं, न्यायार्जितन्तु देवब्राह्मणेभ्यो देयम्। (ब) ततश्चेयं देवतेव शुचौ देशे निवेश्य अर्च्यमाना प्रातः प्रातः सुवर्णपूर्णेव दृश्यते इति अस्याः कल्पः' (भ) इत्यभिधाय कृताञ्जलये मह्यमेनां दत्वा अन्तर्दधे। इयञ्च रत्नभूता चर्मभस्त्रिका देवाय अनिवेद्य नोपजीव्या इति आनीता, तदत्र देवः प्रमाणम्' (म) इति। राजा च नियतम् (य) एवं वक्ष्यति, 'भद्र ! प्रीतोऽस्मि, गच्छ, यथेच्छमेनामुपभुङ्क्ष्व'

---

(न) पापतमम् अयर्थं पापकर्म। आत्मानं स्वम्। आत्मनैव स्वेनैव। अनवसाद्य अहत्वा। सन्तः सत्पुरुषाः, सत्पुरुषा विपदि न अधीरा भवन्ति न वा आत्मघातिनो भवन्ति, परन्तु धैर्यमवलम्ब्य विपत्प्रतीकारार्थं चेष्टन्ते इति भावः।

(प) छिन्नेति।—छिन्नः कर्त्तितः, यः कण्ठः गलदेशः, तस्य प्रतिसन्धानस्य संयोजनस्य।

(फ) लक्षग्राहिणी लक्षं गृह्णाति स्वोदरे स्थापयति या सा तादृशी, प्रतिदिनं लक्षदीनारप्रसविनीत्यर्थः।

(ब) मदन्यत्र मत्तः अन्येषु जनेषु मध्ये इत्यर्थः। इयं चर्मरत्नभस्त्रिका। (वणिग्भ्यः वाराङ्गनाभ्यश्च इति तादर्थ्ये चतुर्थी)। दुग्धे स्वयमेव लक्षदीनारान् प्रसूते इत्यर्थः। "यत्" इत्यादि "देयम्" इत्यन्तसन्दर्भे "यत्समीपे द्रव्यं तिष्ठति तेन" इति शेषो बोध्यः।

(भ) अस्याः चर्मरत्नभस्त्रिकायाः, कल्पः नियमः, लक्षदीनारदोहनविषये इति भावः।

(म) रत्नभूता रत्नस्वरूपिणी, चर्मभस्त्रिकासु सर्वश्रेष्ठा इति भावः, "जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते" इत्युक्तेः। देवाय राज्ञे भवते। नोपजीव्या न भोक्तव्या। प्रमाणं प्रमाता, निर्णयकर्त्ता इत्यर्थः, अत्र मया यत् कर्त्तव्यं तत् भवानेव आदिशतु इति भावः। (प्रमाणं हेतुमर्य्यादा-शास्त्रेयत्ताप्रमातृषु" इति मेदिनी)।

(य) नियतं निश्चितम्।

इति। भूयश्च ब्रूहि, 'यथा न कश्चिदेनां मुष्णाति (र) तथा अनुगृह्यताम्' इति। सोऽवश्यं तदपि अभ्युपेष्यति। (ल) ततः स्वगृहमेत्य यथोक्तमर्थत्यागं कृत्वा दिने दिने पूज्यमानां स्तेयलब्धैरर्थैः नक्तमापूर्य्य एनां (व) प्रातः लोकाय दर्शयिष्यसि, ततः कुबेरदत्तस्तृणाय मत्वा (श) अर्थपतिं कन्यकां स्वयमेव तुभ्यं प्रदास्यति। यदि कुपितोऽर्थपतिः अर्थगर्वात् अभियोक्ष्यते तमपि चित्रैरुपायैः कौपीनावशेषं करिष्यावः, स्वकञ्च (ष) चौर्य्यमनेनैव प्रच्छन्नं भविष्यति' इति।

धनमित्रस्तथैव प्रहृष्टश्चान्वतिष्ठत्। तदहरेव मदादेशात् विमर्दकोऽर्थपतिसेवानियुक्तः तस्य उदारके (स) वैरमवर्द्धयत्। अर्थलुब्धश्च कुबेरदत्तः धनमित्रायैव तनयां प्रादित्सत्, प्रत्यबध्नात् (ह) चार्थपतिः।

अत्रान्तरे काममञ्जर्य्याः कनीयसी स्वसा रागमञ्जरी मां कथमपि चकमे। (क्ष) अहञ्च तद्गुणाकृष्टः नितरां तदनुरक्तः सञ्जातः। सा च गुणानुरागिणी नार्थाकाङ्क्षिण्येव मयि अनुरागमकरोत्, परं तद्भगिनी काममञ्जरी माता च माधवसेना विना शुल्कं (ख) मत्प्रवेशं न्यवारयत्। अहन्तु काममञ्जर्य्याः दासीं धर्मरक्षितां नाम अर्थेनाऽऽवर्ज्य तन्मुखेन तया

---

(र) मुष्णाति चोरयति। (ल) अभ्युपेष्यति स्वीकरिष्यति।

(व) अर्थत्यागं देवब्राह्मणेभ्यो धनदानम्। स्तेयलब्धैः चौर्य्येण सङ्गृहीतैः। नक्तं रात्रौ। आपूर्य्य पूरयित्वा। एनां चर्मरत्नभस्त्रिकाम्।

(श) तृणाय मत्वा तृणवत् अवज्ञाय (अनादरे गम्यमाने चतुर्थी)।

(ष) अभियोक्ष्यते धर्माधिकरणे व्यवहारमानयिष्यतीत्यर्थः। चित्रैः विविधैः। स्वकं निजम्।

(स) विमर्दकः द्यूतसमाजे प्रथमपरिचितः अनभिज्ञः कौड़कः। तस्य अर्थपतेः। उदारके धनमित्रे।

(ह) प्रादित्सत् प्रदातुमैच्छत्। प्रत्यबध्नात् विघ्नम् उदपादयत्।

(क्ष) चकमे प्रार्थयामास, मां प्रति अनुरागिणी जातेत्यर्थः।

(ख) शुल्कं पणम्, आत्मदानविनिमये ग्राह्यं धनमित्यर्थः, स्त्रीणां सम्भोगार्थं देयं धनमिति यावत्।

बन्धक्या पणबन्धम् (ग) अकरवं यथा—'चर्मरत्नं धनमित्रात् मुषित्वा मया तुभ्यं देयम्' इति। ततस्तस्यां 'तथा' इति प्रतिपन्नायां तथा तमर्थं सम्पाद्य (घ) रागमञ्जरीमग्रहीषम्। यस्यां च निशि चर्मरत्नस्तेयवादः, तस्याः प्रारम्भे मत्प्रणिधिर्विमर्दकोऽर्थपतिगृह्यो नाम (ङ) भूत्वा धनमित्रं बहु अतर्जयत्। धनमित्रेणोक्तं, 'भद्र! कस्तवार्थः यत् परस्यार्थे मामाक्रोशसि? (च) किं ते मयाऽपकृतम्?' इति। स भूयोऽपि तर्जयन्निवाब्रवीत्, 'स एष धनगर्वो नाम यत् परस्य भार्य्यां शुल्कक्रीतां पुनस्तत्पितरौ द्रव्येण विलोभ्य स्वीकर्तुम् (छ) इच्छसि, ब्रवीषि च 'कस्तवापकारो मत्कृतः?' इति। ननु प्रतीतम् (ज) एवैतत् 'विमर्दकोऽर्थपतेर्बहिश्चराः प्राणाः' इति। अहं तदर्थं प्राणानपि परित्यजामि, ब्रह्महत्यामपि न गणयामि, ममैकरात्रजागरप्रतीकारस्तवैष चर्मरत्नाहङ्कारदाहज्वरः' (झ) इति। तथा ब्रुवाणश्च पौरैः सामर्षं निवार्य्य ताड़ितो गतोऽभूत्।

---

(ग) आवर्ज्य वशीकृत्य। तया बन्धक्या कुलटया काममञ्जर्या सह। पणबन्धं शुल्कव्यवस्थाम्।

(घ) प्रतिपन्नायां स्वीकृतायाम्। तथा तमर्थं सम्पाद्य धनमित्रात् चर्मभस्त्रिकामानीय काममञ्जर्य्यै दत्त्वा।

(ङ) चर्मरत्नस्तेयवादः चर्मभस्त्रिका केनापि अपहृता इति लोकसमाजे प्रचारः। तस्याः निशायाः, प्रारम्भे प्रवृत्तौ, निशामुखे इत्यर्थः। मत्प्रणिधिः मम गूढचरः। अर्थपतिगृह्यः अर्थपतेर्वश्यः, अर्थपतेः स्वजनः भृत्यो वा इत्यर्थः। नाम इति अलीके, कपटेन अर्थपतेः गृह्य इति आत्मानं प्रकटयित्वा इति भावः।

(च) अर्थः प्रयोजनम्, उद्देश्य इत्यर्थः। आक्रोशसि? तर्जयसि?।

(छ) तर्जयन्निव कपटेन भर्त्सयन् इत्यर्थः। परस्य अर्थपतेरित्यर्थः। भार्य्यां वाग्दत्तां पत्नीमित्यर्थः। शुल्कक्रीतां शुल्केन पणेन, वरात् गृहीतधनेनेत्यर्थः; कन्यापक्षीयेभ्यो धनदानेनेत्यर्थः, ("शुल्कं घट्टादिदेये स्यात् वरादर्थग्रहेऽस्त्रियाम्" इति मेदिनी) क्रीतां स्वीकृताम्, आयत्तीकृतामित्यर्थः, धनविनिमयेन लब्धामिति यावत्। तत्पितरौ कन्यायाः मातापितरौ। द्रव्येण अर्थेन। स्वीकर्तुम् आत्मसात्कर्तुम्।

(ज) प्रतीतं प्रसिद्धम्। (झ) एकेति।—एकरात्रम् एकनिशां, जागरः जागरणमेव, प्रतीकारः उपशमः, निवारणोपाय इत्यर्थः यस्य तादृशः।

धनमित्रेण च आर्त्तेनेव इयं वार्त्ता पार्थिवाय प्रागेव (ञ) निवेदिता। स च अर्थपतिमाहूय एकान्तेऽपृच्छत्, 'अङ्ग ! (ट) अस्ति कश्चित् विमर्दको नाम तव ?'। तेन च मूढात्मना 'अस्ति देव ! परं मित्रम्' इति कथिते राज्ञोक्तं, 'तेन किञ्चित् प्रयोजनमस्ति, तमाह्वय।' अथ स स्वगृहमेत्य नानास्थानेषु तम् अन्वेष्टुम् आरब्धवान्, न च कुत्रापि प्राप। कथं लभ्यते ? स खलु तदहरेव मदादेशात् त्वदन्वेषणार्थम् उज्जयिनीं गतः। अर्थपतिस्तु तमदृष्ट्वा तत्कृतमपराधं स्वमेव मत्वा मोहात् भयाद्वा प्रत्याख्याय पुनर्धनमित्रविभावितेन राज्ञा निगृह्य (ठ) निगडबन्धनमनीयत।

तेषु च दिवसेषु कल्पोक्तेन विधिना चर्मरत्नं दोग्धुकामा काममञ्जरी पूर्वदुग्धं च क्षपणकीभूतं विरूपकं रहसि (ड) गत्वा ततोऽपहृतं सर्वमर्थं तस्मै प्रत्यर्पयामास। सोऽपि कथञ्चित् क्षपणकग्रहमोचितात्मा मयोपदिष्टोऽतिप्रीतः स्वधर्ममेव प्रत्यपद्यत। (ढ) काममञ्जरी अपि अजिनरत्नदोहेच्छया स्वमभ्युदयं (ण) निःशेषमकरोत्।

---

चर्मेति।—चर्मरत्नेन चर्मरत्नलाभेन, यः अहङ्कारः गर्वः, स एव दाहज्वरः सन्तापाधिकज्वरः, अहम् एकरात्रं जागरित्वा ते चर्मरत्नं हरिष्यामि, तेन च ते धनाहङ्कारः चूर्णीभविष्यतीत्यर्थः।

(ञ) आर्त्तेनेव आत्मानमतीव व्यथितवत् प्रकटयित्वा इत्यर्थः। इयं वार्त्ता विमर्दकोक्तिः। प्रागेव चर्मरत्नस्तेयवादात् पूर्वमेव।

(ट) अङ्ग ! भोः !। (ठ) प्रत्याख्याय प्रत्याहृत्य, निजपूर्वोक्तिमस्वीकृत्येत्यर्थः। धनमित्रविभावितेन धनमित्रकर्तृकोद्बोधितेनेत्यर्थः। निगृह्य निग्रहं कृत्वा, पीडयित्वेत्यर्थः।

(ड) दोग्धुकामा लक्षदीनारं प्राप्तुं साभिलाषा। पूर्वदुग्धं प्राक् शोषित-सर्वधनमिति यावत्। क्षपणकीभूतं बौद्धसन्न्यासित्वेन परिणतम्। विरूपकं वसुपालितापरनामानं वणिक्तनयम्। रहसि गोपने।

(ढ) क्षपणकेति।—क्षपणकः बौद्धसन्न्यासधर्मः एव जैनधर्मः एव वा, ग्रहः उपद्रवजनकदुष्टग्रहविशेषः, यद्वा—क्षपणके यः ग्रहः निर्बन्धः, आसक्तिरिति यावत्, ("ग्रहोऽनुग्रहनिर्बन्ध-ग्रहणेषु रणोद्यमे। सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः॥" इति मेदिनी) तस्मात् मोचितः रक्षितः इत्यर्थः, आत्मा स्वं येन तादृशः। प्रत्यपद्यत आश्रयदित्यर्थः।

(ण) स्वं निजम्, अभ्युदयम् ऐश्वर्य्यम्।

...थ मद्दिष्टो धनमित्रः पार्थिवं मिथो (त) व्यजिज्ञपत्, 'देव! वार-
... काममञ्जरी नितरां धनलुब्धा अद्य सर्वस्वं निरपेक्षं (थ) वितरति,
... मदीयचर्मरत्नलाभोऽस्य हेतुः, अस्याश्च तादृश एव कल्प इति
...र्कं, तदमुष्यामस्ति मे शङ्का' इति। राजा तु सद्य एव तां
...नीय समाजुहाव। (द)

...हन्तु सविषादमिव रहसि तामकथयम्, 'आर्य्ये! नूनं सर्वस्वत्यागात्
...प्रकाशात् आशङ्कनीयचर्मरत्नलाभाऽसि, तद्वार्त्ताप्रश्नाय (ध) राज्ञा
...हूयसे। पुनः पुनश्च आग्रहेण पृष्टया त्वया नियतमेव तदागतित्वे-
...नापदेश्यः, ततश्च भावी मम चित्रवधः, (न) मृते च मयि न जीवि-
...व ते भगिनी, त्वञ्च निःस्वीभूता, चर्मरत्नञ्च धनमित्रमेव भजिष्यति;
...यमापत् समन्ततोऽनर्थानुबन्धिनी, (प) तदत्र उपायश्चिन्त्यताम्' इति।
... तन्मात्रा च अश्रूणि विसृज्योक्तम्, 'अस्मद्बालिश्यात् निर्भिन्नं
...स्यं, परमर्थपती तदयशो रूढं, तेन चास्माभिः सङ्केतेन तदस्मत्स्थं
...स्मिति अपदिश्य अलमात्मानं शोधयितुम्' (फ) इति मामुक्त्वा
...ान्तिकमगमत्।

---

(त) मिथः निर्जने।

(थ) वारमुख्या गणिकाप्रधाना। नितराम् अत्यर्थम्। अद्य इदानीम्। ...पेक्षम् अनासक्तमित्यर्थः, अविचारितमिति यावत्।

(द) समाजुहाव आह्वानं चकार।

(ध) आशङ्कनीयेति।—आशङ्कनीयः सम्भावनीयः, चर्मरत्नस्य लाभः प्राप्तिर्यया ...ऽसि, त्वमिति शेषः। तद्वार्त्ताप्रश्नाय तस्य वृत्तान्तं प्रष्टुम्।

(न) आग्रहेण निर्बन्धेन। पृष्टया जिज्ञासितया। नियतमेव निश्चितमेव। ...त्वे।—तस्य चर्मरत्नस्य, आगतित्वेन आगमनकारणत्वेन, प्राप्तिहेतुत्वेनेत्यर्थः। ...देश्यः वर्णनीयः, मत्सकाशात् चर्मरत्नमधिगतमित्येव त्वं कथयिष्यसीत्यर्थः। ...वी भविता। चित्रवधः विविधयन्त्रणादानपूर्वकहत्या इत्यर्थः।

(प) समन्ततः सर्वतोभावेन। अनर्थानुबन्धिनी अनिष्टजननी।

(फ) अस्मद्बालिश्यात् अस्माकं मौर्ख्यात्, ("मूर्खवैधेयबालिशाः" इत्यमरः)। ...भिन्नं प्रकाशितम्। रहस्यं गोपनीयविषयः। तदयशः चर्मरत्नहरणपाप-

राज्ञा निर्बन्धेन पृष्टे च पुनः पुनः कर्णनासाच्छेदभीषिते तमेवार्थपतिं तदागतित्वेन प्रकटितवत्यौ। (ब) कुपितं राजानं तस्य प्राणेषु दण्डयन्तं (भ) धनमित्रः प्राञ्जलिर्निषिध्याब्रवीत्, 'देव ! मौर्यदत्त एष वरः वणिजाम्, ईदृशेषु अपराधेषु नास्यसुभिरभियोगः, (म) वरं हृतसर्वस्वो निर्वासनीय एषः' इति। तेन च राजा सन्तुतोष, धनमित्रञ्च लोकाः प्राशंसन्। अर्थपतिश्च कौपीनावशेषः सर्वजनसमक्षं निरवास्यत। (य) तद्द्रव्याणाञ्च केनचिदंशेन निःस्वा काममञ्जरी धनमित्रानुरोधेन (र) राज्ञा सानुकम्पमनुगृहीता। धनमित्रश्च शुभे दिने कुलपालिकां परिणीतवान्।

एवं सिद्धकामेन मया लुब्धसमृद्धवर्गस्तथा मुषितः यथा कपालपाणिः (ल) स्वैरेव धनैर्मद्दत्तैः समृद्धीकृतस्यार्थिवर्गस्य गृहेषु भिक्षार्थमभ्रमत्।

न हि अतिनिपुणोऽपि जनो नियतिम् (व) अतिक्रमितुं शक्नोति। एकदाऽहं सुरापानमत्तः रागमञ्जरीगृहात् शृगालिकया नाम तद्दास्या

---

कीर्तिः। रूढं प्रसिद्धम्। व्यपदिश्य कीर्तयित्वा। अलं समर्था, भविष्यामीति शेषः। शोधयितुं निर्दोषं प्रतिपादयितुमित्यर्थः।

(ब) निर्बन्धेन आग्रहप्रकारेण। कर्णेति।—कर्णनासयोः छेदः छेदनं, तेन भीषिते भापिते, प्राप्तभये इत्यर्थः, काममञ्जरीमाधवसेने इति शेषः, सत्यं न वदथश्चेत् युवयोर्नासाकर्णौ छेत्स्यामि इत्येवं राजवचनेन इति भावः। तदागतित्वेन धनस्य प्राप्तिहेतुत्वेन। प्रकटितवत्यौ प्रकाशितवत्यौ।

(भ) तस्य अर्थपतेः। प्राणेषु जीवने, दण्डयन्तं शास्तिं विदधतं, प्राणदण्डाज्ञां ददतमित्यर्थः।

(म) मौर्यदत्तः मौर्यदत्त इति नामान्तरेण प्रसिद्धः अर्थपतिः। वणिजां वरः वणिक्कुले श्रेष्ठः। असुभिः प्राणैः, अभियोगः शास्तिः, प्राणदण्ड इत्यर्थः।

(य) निरवास्यत देशात् निर्वासितः।

(र) तद्द्रव्याणां तस्य अर्थपतेः, द्रव्याणां धनानां, केनचिदंशेन किञ्चिदंशेन। धनमित्रानुरोधेन धनमित्रकर्तृकप्रार्थनानुरोधेन, सानुनयं प्रार्थितेन इति भावः।

(ल) कपालपाणिः कपालं खर्परं, भिक्षापात्रमित्यर्थः, पाणौ हस्ते यस्य स तादृशः।

अनुगम्यमानो रजन्यां राजवीथ्यामटन् नागरिकबलैः 'तस्करः' इति अभिहन्यमानः पाणिस्थितेन निस्त्रिंशेन द्विवान् निहत्य अवघूर्णमानताम्रदृष्टिः (ग) अपतम् आगमञ्च ममाभ्यासं शृगालिका आर्त्तरवान् विसृजन्ती, अवध्ये (घ) च अहम् अरिभिः। आपदा तु मत्तताऽपहारिण्या सद्य एव बोधितो (ङ) व्यचिन्तयम्, 'अहो! मोहोऽयं मम; प्रसृततरञ्च सख्यं मया सह धनमित्रस्य, मत्परिग्रहत्वञ्च रागमञ्जर्य्याः, मत्पापेन च तौ श्वो निग्राहयिष्येते, (च) तदत्र तादृगुपायः कर्त्तव्यः यथा तौ नापदमाप्नुतः, अहञ्च अनर्थात् मोच्ये' इति विविच्य शृगालिकामब्रवम्, 'अपेहि जरतिके! या तामर्थलुब्धां दग्धगणिकां रागमञ्जरीम् अजिनरत्नमत्तेन शत्रुणा मे मित्रच्छद्मना धनमित्रेण सङ्गमितवती, सा हताऽसि; (छ) तस्य पापस्य चर्मरत्नमोषात् दुहितुश्च ते साराभरणापहारात् अहमद्य एभिर्धृतो जिहासामि (ज) प्राणान्' इति। सा तु परमधूर्त्ता साश्रु-

---

(ग) अभिहन्यमानः ताड्यमानः। निस्त्रिंशेन खड्गेन। द्विवान्, जनानिति शेषः। अवेति।—अवघूर्णमाना भ्रमन्ती, ताम्रा अरुणवर्णा, दृष्टिः नेत्रं यस्य तादृशः।

(घ) ममाभ्यासं मम समीपम्। आर्त्तरवान् कातरध्वनीन्, विसृजन्ती त्यजन्ती, क्रन्दन्तीत्यर्थः। अवध्ये संयम्ये, बद्ध इत्यर्थः।

(ङ) मत्तताऽपहारिण्या मत्ततानाशिन्या। बोधितः सञ्जातचैतन्यः।

(च) प्रसृततरम् अतिशयेन प्रसिद्धमित्यर्थः, सर्वत्र व्याप्तमिति भावः। मत्परिग्रहत्वं मम पत्नीत्वं, ("परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः" इति मेदिनी)। श्वः परदिने। निग्राहयिष्यते पीडयिष्येते, राज्ञा रक्षिभिरिति शेषः।

(छ) अपेहि अपसर, दूरीभवेत्यर्थः। जरतिके! वृद्धे!। दग्धगणिकां भस्मवत् तुच्छवेश्याम्, अस्पृश्यवेश्यामिति यावत्। मित्रच्छद्मना कपटसुहृदा। सङ्गमितवती संयोजितवती, मिलितां कारितवतीत्यर्थः। हताऽसि स्वकीयपापात् स्वयमेव विनष्टाऽसि।

(ज) पापस्य पापात्मनः। सारेति।—साराणां स्थिरांशानाम्, उत्कृष्टानामित्यर्थः, आभरणानां भूषणानाम्; यद्वा—साराणां धनानाम्, आभरणानाञ्च, ("सारो बले स्थिरांशे च मज्जनि न्याय्ये च नीरे च धने च सारम्। वरेऽन्यवत् सारमुदाहरन्ति" इति विश्वः) अपहारात् चौर्य्यवृत्त्या अपसारणात्। जिहासामि त्यक्तुमिच्छामि।

गतेदं तान् रक्षिकपुरुषान् मम पुरतः सविनयमब्रवीत्, 'भद्राः! प्रतीक्ष्यतां कञ्चित् कालं यावदस्मात् अस्मदीयं सर्वं मुषितम् (ग) अवगच्छेयम्' इति। 'तथा' इति तैः प्रतिपन्ने मामासाद्यावादीत्, 'सौम्य! क्षमस्व अस्य दासीजनस्यैकमपराधम्, अस्तु स त्वत्कलत्राभिमर्शी वैरास्पदं (घ) धनमित्रः, स्मरं तु चिरकृतां परिचर्य्यामनुग्रहीतुमर्हसि दासीं रागमञ्जरीम्। तद्ब्रूहि क्व निहितमस्या भूषणजातम्?' इति। ततोऽहं दयमान इवाब्रवं, 'भवतु, मृत्युहस्तपतितस्य किं ममामुष्यां वैरानुबन्धेन?' इति कर्णे एवैनामशिक्षयम्, 'एवमेवं प्रतिपत्तव्यम्' (ङ) इति। सा तु प्रतिपन्नार्था 'जीव वत्स! चिरम्' इति अभिधाय क्षणात् प्रासरत्। रक्षिभिश्चाहमानीये बन्धनगृहम्।

उत्तरेद्युरागत्य दृप्ततरः सुभगमानी सुन्दरम्मन्यः (च) युवा कान्तको नाम काराध्यक्षः किञ्चिदिव भर्त्सयित्वा मामभ्यधात्, 'चेद्धनमित्रस्य अजिजरत्नं रागमञ्जरीभूषणजातञ्च न प्रयच्छसि, द्रक्ष्यसि पारमष्टादशानां कारणानाम्, अन्ते (छ) च मृत्युमुखम्' इति। मया तु ईषद्धसता अभिहितं, 'यद्यपि दयामः-जन्मनो मुषितमर्थजातं, न त्वर्थपतिदाराप-

(ग) भद्राः! साधवः!! मुषितम् अपहृतं, द्रव्यजातमिति शेषः।

(घ) प्रतिपन्ने स्वीकृते। आसाद्य प्राप्य, मत्समीपमागत्येत्यर्थः। अस्य रागमञ्जरीरूपस्य। त्वदिति।—तव कलत्रं भार्य्याम्, अभिमृष्टवान् धर्षितवानिति तथाभूतः, तव पत्नीधर्षणकारीत्यर्थः। वैरास्पदं विद्वेषपात्रम्।

(ङ) मृत्युहस्तपतितस्य यमसदृशरक्षिवर्गहस्तगतस्य, आसन्नमृत्योरित्यर्थः। अमुष्यां रागमञ्जर्य्याम्। वैरानुबन्धेन शत्रुताऽनुवर्त्तनेन। प्रतिपत्तव्यं प्रतिविधातव्यं, कर्त्तव्यमित्यर्थः।

(च) उत्तरेद्युः परस्मिन् दिवसे। दृप्ततरः अतिशयेन गर्वितः। सुभगमानी आत्मानं सुभगं स्त्रीजनप्रियं मन्यते यः स तादृशः, यद्वा—सुभगम् आत्मानं महासौभाग्यशालिनं मन्यते यः स तादृशः, ("सर्वोन्नतत्व सौभाग्य तद्वान् सुभग उच्यते" इति दिवाकरः)। सुन्दरम्मन्यः आत्मानं सुन्दरं मन्यते यः स तादृशः सौन्दर्य्याभिमानी।

(छ) पारम् अन्तं, सीमानमित्यर्थः। अष्टादशानाम् अष्टादशविधानां, कारणानां यातनानां, ("कारणा तु यातना तीव्रवेदना" इत्यमरः) अष्टादशविधयातनायाः विवरणं नीतिशास्त्रे द्रष्टव्यम्। अन्ते शेषे, यातनाप्रदानानन्तरमित्यर्थः।

हारिणः शठोर्मे मित्रमुखस्य धनमित्रस्य चर्मरत्नप्रत्याशां पूरयेयमिति मे द्रढीयसि सन्धा।' (ज) इति।

अथ कदाचिद्दिवसावसाने शृगालिका समेत्य सहर्षं मामब्रवीत्, 'सौम्य! फलिता ते सुनीतिः, यथा त्वयाऽऽदिष्टाऽस्मि तथा धनमित्रमेत्याब्रवम्, 'आर्य्य! तवेत्यमापन्नः (झ) सुहृदित्युवाच, 'अहमद्य पानदोषात् बद्धः, त्वया तु निःशङ्कम् अद्यैव राजा विज्ञापनीयः, 'देव! देवप्रसादादेव पुनरपि तदजिनरत्नमर्थपतिमुषितमासादितम्। अथ तु भर्त्ता रागमञ्जर्य्याः कश्चिदक्षधूर्त्तः (ञ) कथञ्चित् मया सख्यमबध्नात्। तत्सम्बन्धात् वस्त्राभरणादिना सन्तोष्य तद्भार्य्यां रहसि प्रतिदिनमन्ववर्त्ते, तदसावशङ्किष्ट, (ट) कुपितश्च मम तदजिनरत्नं तस्याश्चाभरणजातममुष्णात्। साम्प्रतं भूयस्तेयाय भ्रमन्नरक्ष्यत नागरिकबलैः, आपन्नेन च तेन रुदत्यै रागमञ्जरीपरिचारिकायै पूर्वप्रणयानुवर्त्तिना तद्भूषणनिधानोद्देशः (ठ) कथितः, ममापि चर्मरत्नं यथा प्रायच्छत् (ड) तथा देवपादैरनुग्रहः कार्य्यः' इति। तथा निवेदितश्च राजा मामसुभिरवियोज्य सान्त्वनेन स्वं ते दापयितुं

---

(ज) मित्रमुखस्य मित्रच्छद्मनः, कपटमित्रस्येत्यर्थः। ("मुखन्तु वदने मुख्ये तुण्डे छद्मनि वा पुमान्" इति मेदिनी) यद्वा—मित्रमुखस्य मुखे मित्रतां प्रकटयत इत्यर्थः। द्रढीयसी अतिशयेन दृढा। सन्धा प्रतिज्ञा। ("सन्धा स्थितौ प्रतिज्ञायाम्" इति विश्वः)।

(झ) फलिता सञ्जातफला, सफला इत्यर्थः। आपन्नः विपदि पतितः।

(ञ) अक्षधूर्त्तः द्यूतकरः। (ट) तत्सम्बन्धात् तेन सह मित्रतासम्पर्कात्। रहसि निर्जने। अन्ववर्त्ते अनुवर्त्तनमकरवम्, अन्वरञ्जयमित्यर्थः। असौ रागमञ्जर्य्याः भर्त्ता। अशङ्किष्ट सन्देहमकार्षीत्।

(ठ) स्तेयाय चौर्य्याय, अपहरणार्थमित्यर्थः। पूर्वप्रणयानुवर्त्तिना पूर्वप्रेमानुरोधिना, पूर्वप्रणयं स्मरन्नित्यर्थः। तदिति।—तस्याः रागमञ्जर्य्याः, भूषणानाम् अलङ्काराणाम्; यद्वा—तेषाम् अपहृतानां, भूषणानां निधानोद्देशः अवस्थापनस्थानम्।

(ड) प्रायच्छत् प्राददात्। (प्रपूर्वक "दाण्" धातोर्लङ्)।

यतिष्यते, तन्नः पथ्यम्' (ढ) इति। अचैव त्वदनुभावप्रत्ययादवस्तेन (ण) तेन तत्तथैव सम्पादितम्। अथाहं रागमञ्जर्याः सकाशात् यथेप्सितानि वस्तूनि आदाय त्वदादिष्टेन मार्गेण राजदुहितुरम्बालिकाया धात्रीं माङ्गलिकीमनुरञ्जयन्ती तामेव सङ्गमीकृत्य (त) रागमञ्जर्यास्त्वम्बालिकायाश्च सख्यमवर्द्धयम्। क्रमेण तत्समोपगतागतेनाहं तस्याः परं प्रसादपात्रम् (थ) आसम्। एकदा च तस्याः स्थानस्थितमपि कर्णकुवलयं स्खलितमिति प्रतिसमादधती प्रमत्तेव भ्रंशयित्वा पुनरुत्क्षिप्य भूमेः तेन, केनापि कारणेन कन्यकाऽन्तःपुरं प्रविष्टस्य कान्तकस्योपरि पारावतत्रासनापदेशात् (द) प्रहसन्ती प्रहृतवती। सोऽपि किञ्चिद्दुर्मुखः स्मयमानो मत्कर्मप्रहासितायाः राजदुहितुः विलासप्रायम् आकारमात्माभिलाषमूलमिव यथा तर्कयेत् तथा मयाऽपि संज्ञयैव किमपि चतुरमाचेष्टितम्। (ध)

---

(ढ) असुभिः प्राणैः, अभियोज्य अविच्छिद्य, प्राणविनाशम् अकृत्वेत्यर्थः। स्वं धनं, धर्मं वधमस्त्रिकामिति यावत्। ते तुभ्यम्। नः अस्माकं, पथ्यं हितम्।

(ण) त्वदिति।—तव अनुभावे प्रभावे, कार्य्यनैपुण्ये इति यावत्, प्रत्ययात् विश्वासात्। अवस्तेन अभीतेन, तव विपत्तिं श्रुत्वाऽपि तव दक्षताकारणात् भयमप्राप्नुवता इत्यर्थः।

(त) यथेप्सितानि अभिलाषानुयायीनि। मार्गेण उपायेनेत्यर्थः। अनुरञ्जयन्ती प्रीणयन्ती। सङ्गमीकृत्य उपायीकृत्य, द्वारीकृत्य इत्यर्थः, तत्साहाय्येनेति यावत्; यद्वा—सङ्गमीकृत्य निःश्रेणीकृत्य, अधिरोहणीस्वरूपं कृत्वेत्यर्थः. ("प्रत्युपाये सङ्गमे च निःश्रेण्यां सङ्गमो मतः" इत्युत्पलिनी)।

(थ) प्रसादपात्रम् अनुग्रहभाजनम्। (द) तस्याः राजकन्यायाः। स्थानेति।—स्थाने उचितावस्थितिप्रदेशे, कर्णे इति यावत्, स्थितमपि वर्त्तमानमपि। कर्णकुवलयं कर्णभूषणीभूतनीलोत्पलम्। स्खलितं स्वस्थानात् स्खलितम्। प्रतिसमादधती यथास्थानं स्थापयन्तीत्यर्थः। प्रमत्तेव अनवहितेव, छलेन प्रमत्तवत् भावं प्रदर्शयन्तीत्यर्थः। भ्रंशयित्वा पातयित्वा, कर्णादिति शेषः। तेन कर्णकुवलयेन। पारावतत्रासनापदेशात् कपोतेभ्यो भीतिप्रदर्शनव्याजात्।

(ध) स्मयमानः ईषत् हसन्। मदिति।—मम कर्मणा कान्तकोपरि कुवलयप्रक्षेपरूपव्यापारेण इत्यर्थः, प्रहासितायाः अतिशयं हसन्त्याः। विलासप्रायं विलासबहुलम्। आत्माभिलाषमूलं निजमनोरथसिद्धिनिमित्तमित्यर्थः। तर्कयेत्

स तु कामपरवश इव कथं-कथमपि कन्यकाऽऽगारात् (न) अपासरत्।

अथाहं सायं राजकन्याऽङ्गुरीयकमुद्रितां वासिताम्बूलादिगर्भां (प) पेटिकां रागमञ्जर्या प्रेषितां नीत्वा कान्तकागारमगाम्। स च गाढे प्रेमसागरे मग्नो नावमिव मामासाद्य परम् अहृष्यत्। अवस्थान्तराणि च राजकन्यायाः सुदारुणानि वर्णयन्त्या मया स दुर्मतिः सुदूरमुदमाद्यत। (फ) इत्थञ्च सन्धुक्षितकामाग्निरेकान्ते स मयोक्तः, 'आर्य्य! मम प्रतिवेशी कश्चित् सामुद्रिकः (ब) तव सुलक्षणानि दृष्ट्वा माम् एकान्तेऽवदत् यथा, 'राज्यमिदं कान्तकस्य हस्ते पतिष्यति' इति। तदनुरूपञ्च राजकन्या त्वां कामयते, तदेकापत्यश्च राजा तया सङ्गतञ्च त्वामुपलभ्य कुपितोऽपि नोच्छेत्स्यति, प्रत्युत ग्राहयिष्यत्येव तुभ्यं राज्यं, तदेवमर्थोऽर्थान्तरानुबन्धी (भ) कथं नानुष्ठीयते? यदि कुमारीपुरप्रवेशाभ्युपायं नावबुध्यसे, ननु काराभित्त्यामियमन्तरालम् आरामप्राकारस्य, (म)

---

विचारयेत्, मन्येत इत्यर्थः। संज्ञयैव हस्तचालनादिरूपेङ्गितेनैव इत्यर्थः। ("संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना" इत्यमरः)। किमपि अनिर्देश्यम्। चतुरं कल्पनापूर्णव्यापारमित्यर्थः। अचेष्टितम अकारि इत्यर्थः।

(न) कथं-कथमपि अतिकष्टेन। कन्यकाऽऽगारात् कन्याऽन्तःपुरात्।

(प) राजकन्येति।—राजकन्यायाः अङ्गुरीयकेण अङ्गुलीभूषणेन, मुद्रितां दत्तमुद्राचिह्नाम्। वासितेति।—वासं वासितं, कर्पूरादिभिः सुगन्धीकृतमित्यर्थः, ("घनसारादिभिर्यत्तु वासितं वासमुच्यते" इति रत्नावली) यत् ताम्बूलं वीटिका, तदादयः तत्प्रभृतयः, गर्भे अभ्यन्तरे यस्यास्तादृशीम्।

(फ) अवस्थान्तराणि कामपीडितत्वेन दशाविशेषान्। सुदारुणानि अतिशयक्लेशावहानि। सुदूरम् अत्यर्थम्। उदमाद्यत उन्मत्तः अक्रियत।

(ब) सन्धुक्षितकामाग्निः उद्दीपितमदनानलः। सामुद्रिकः ज्योतिषिकः।

(भ) उपलभ्य ज्ञात्वा। तदिति।—सा एव एकम् एकमात्रम्, अपत्यं सन्तानो यस्य स तादृशः। तया राजकन्यया। उच्छेत्स्यति हनिष्यति। प्रत्युत वैपरीत्येन। एवमर्थः ईदृशराजकन्यासमागमरूपं वस्तु। अर्थान्तरानुबन्धी प्रयोजनान्तरानुवर्त्ती, राज्यलाभरूपावान्तरविषयफलकः इति यावत्।

(म) काराभित्तेः कारागारकुड्यात्, बन्धनागारस्य भित्तिप्रदेशादित्यर्थः।

केनचित् निपुणेन तस्करेण तावतीं सुरुङ्गां कारयित्वा प्रविष्टस्योपवनं तवोपरि अस्मदायत्तैव रक्षा; रक्ततरश्च (य) तस्याः परिजनो रहस्यं न भेत्स्यति' इति।

सोऽब्रवीत्, 'भद्रे! साधूक्तम्, अस्ति कश्चित्तस्करः खननकर्मणि सुनिपुणः, स चेल्लब्धः क्षणेनैतत् कर्म साधयिष्यति' इति। 'कोऽसौ? कथं न लभ्यते?' इति मयोक्ते सः 'येन तत् धनमित्रस्य चर्मरत्नं मुषितं सः' इति त्वामेव निरदिक्षत्। 'यद्येवम् एहि 'त्वयाऽस्मिन् कर्मणि साधिते चित्रैरुपायैस्त्वमहं मोचयिष्यामि' इति शपथं कृत्वा तेन सह सन्धाय सिद्धेऽर्थे भूयोऽपि निगडयित्वा 'चौरोऽयं सर्वथा उपक्रान्तोऽपि (र) न तद्धनरत्नं दर्शयिष्यति' इति राज्ञे विज्ञाप्य चित्र-मेनं घातयिष्यसि, तथा सति अर्थः सिध्यति रहस्यञ्च न भेत्स्यति' इति मयोक्ते सोऽतिहृष्टः 'तथा' इति प्रतिपद्य मामेव त्वत्प्रलोभने (ल) नियुज्य बहिरवस्थितः। किमतःपरं विधेयं चिन्त्यताम्' इति।

प्रीतेन मयोक्तं, 'मदुक्तमन्यं, त्वन्नय (व) एवात्र महान्, आनयैनम्'

---

व्यामस्य प्रसारितयोः सकरयोर्बाह्वोः मध्यस्थावकाशरूपपरिमाणविशेषस्य, "बाँधो" इति प्रसिद्धस्येत्यर्थः, ("व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्" इत्यमरः) वयं, विव्यामपरिमितम्। अन्तरालम् अवकाशः। आरामप्राकारस्य उपवन-प्राचीरस्य। ("आरामः स्यादुपवनम्" इति "प्राकारो वरणः सालः प्राचीरं प्रान्ततो वृतिः" इति चामरः।

(य) तावतीं तावत्परिमाणाम्। सुरुङ्गां सन्धिम्। अस्मदायत्तैव अस्माक-मधीनैव। रक्षा रहस्यगुप्तिः। रक्ततरः अतिशयेन अनुरागवान्।

(र) अस्मिन् कर्मणि सुरङ्गाखननरूपकार्य्ये। साधिते सम्पादिते। चित्रैः विविधैः। उपायैः कौशलैः। सन्धाय मिलित्वा, सन्धिं सम्पाद्येत्यर्थः। सिद्धेऽर्थे प्रयोजनसिद्धौ सत्याम्। सर्वथा सर्वप्रकारेण, सामदानादिभिरुपायैरिति यावत्। उपक्रान्तः सान्त्वितः, प्रकृतवृत्तान्तं प्रकाशयितुं प्ररोचित इत्यर्थः।

(ल) चित्रम् अद्भुतं यथा तथा, कुक्कुरदंशनादिनानाविधैरुपायैरित्यर्थः। अर्थः प्रयोजनं, तव उद्देश्यम्। त्वत्प्रलोभने लोभप्रदर्शनेन त्वां वशीकर्त्तुमित्यर्थः।

(व) मदुक्तं मया यत् उपदिष्टं तदित्यर्थः। अल्पं सामान्यम्, अकिञ्चित्कर-

इति। अथानीतोऽयं मन्मोचनाय शपथं कृतवान्, अहञ्च रहस्यानिर्भेदाय। ततोऽहं छिन्नबन्धनः काराभित्तिकोणादारभ्य उरगास्येन (श) सुरङ्गां कृत्वा अचिन्तयं, 'जिघांसुरेवामुना मन्मोचनाय शपथः कृतः, तदमुं हत्वाऽपि न दोषेण लिप्ये' इति निष्पतत एव मे निगडनाय प्रसार्य्यमाणपाणेस्तस्य पादेनोरसि प्रहृत्य पातितस्य तस्यैव छुरिकया शिरो न्यकृन्तम्। (ष) ततश्च 'शृगालिकामुखेन कन्याऽन्तःपुरसन्निवेशं ज्ञात्वा अमुतः किञ्चित् चोरयित्वा निवर्त्तिष्ये' इति मनसि कृत्वा तदुपदर्शितक्रमेण (स) प्रविश्य कन्याऽन्तःपुरं दुग्धफेननिभे पर्य्यङ्कतले विश्रब्धप्रसुप्तां शरदम्भोधरोत्सङ्गशायिनीमिव सौदामनीं (ह) राजकन्यामपश्यम्।

दृष्ट्वैव कामवशश्चोरयितव्यनिस्पृहतयैव तावच्चौर्य्यमाणहृदयः किंकर्त्तव्यविमूढः क्षणं स्थित्वा व्यचिन्तयं, 'चेदिमां नाप्नुयां न मृष्यति मां मदनः, तदिदमत्र प्राप्तरूपम्' (क) इति विविच्य तलत्यं फलकमेक-

---

मित्यर्थः। त्वन्नयः तव नीतिः, तव चातुर्य्यमिति यावत्, तव बुद्धिचातुर्य्येणैव सर्वं सम्पत्स्यते इति भावः।

(श) उरगास्येन सर्पमुखाकारखननसाधनास्त्रविशेषेण।

(ष) निष्पततः एव आगच्छत एव, मे निगडनाय मां शृङ्खलयितुम्; यद्वा—निष्पततः एव निर्गच्छत एव, उपवनगतसुरङ्गापरप्रान्तादिति भावः। पादेनोरसि प्रहृत्य उरसि वक्षोदेशे, पादेन चरणेन, प्रहृत्य आहत्य। न्यकृन्तं चिच्छेद।

(स) अमुतः कन्याऽन्तःपुरात्। तदिति।—तया शृगालिकया, उपदर्शितः प्रदर्शितः, उपदिष्ट इति यावत्, यः क्रमः परिपाटी, अन्तःपुरसंस्थानविशेष इति यावत् तेन, तदुपदिष्टमार्गावलम्बनेन इत्यर्थः।

(ह) विश्रब्धप्रसुप्तां विश्वस्तनिद्रितां, निःशङ्कनिद्रितामित्यर्थः। शरदिति।—शरदम्भोधरस्य शरत्कालिकमेघस्य, निर्जलतया अतिशुभ्रस्येति भावः, उत्सङ्गे क्रोड़े, अभ्यन्तरे इति यावत्, शेते अवतिष्ठते इति तादृशीम्। सौदामनीं तड़ितम्।

(क) चोरयितव्यनिस्पृहः चौर्य्यविषये निरभिलाषः, चौर्य्याभिलाषं विसृज्य इत्यर्थः। मृष्यति क्षमते। प्राप्तरूपं रम्यं, मनोज्ञोपाय इत्यर्थः, इदं कर्त्तव्यमिति भावः। ("प्राप्तरूपौ ज्ञरम्ययोः" इति मेदिनी)।

मादाय मणिसमुद्गकात् वर्णवर्त्तिकाम् उद्धृत्य तथा-शयानां तस्याश्च चरणलग्नमाबद्धाञ्जलिं मामालिखम् आर्य्याञ्चेमाम् ।—(ख)

'त्वामयमाबद्धाञ्जलि दासजनस्तमिममर्थयते ।
स्वपिहि मया सह सुरतव्यतिकरखिन्नेव मा मैवम् ॥' (ग)

ततश्चाङ्गुलीयकविनिमयं कृत्वा कथंकथमपि तस्मात् निर्गत्य सुरुङ्गया पुनर्बन्धनागारमेत्य च तत्र बद्धस्य नागरिकवरस्य सिंहघोषनाम्नः तेषु तेषु दिनेषु मित्रत्वेनोपचरितस्य (घ) 'एवं मया हतः कान्तक इति रहस्यं निर्भिद्य लब्धव्यो मोक्षः' इत्युपदिश्य शृगालिकया सह निरगाम् । राजपथे च नागरिकपुरुषान् वञ्चयित्वा रागमञ्जरीगृहमेत्य चिरवियोगखिन्नां तामाश्वास्य नीत्वा च तां निशां प्रभाते पुनरुदारकेण सह समगच्छे । (ङ)

अथ भगवन्तं मरीचिं पुनःप्राप्तप्रभावमुपगम्य तत्सकाशात् त्वद्गति-

---

(ख) फलकं पट्टिकाम्. आलेख्यचित्रणोपयोगिकाष्ठखण्डमित्यर्थः । मणिसमुद्गकात् मणिमयसम्पुटकात्, रत्ननिर्मितवर्णवर्त्तिका-तुलिकाद्याधारपेटिकात इत्यर्थः, ("समुद्गकः सम्पुटकः" इत्यमरः) । वर्णवर्त्तिकां रञ्जनतुलिकाम् । आलिखम् इत्यस्य एकत्र—चित्रितवान्, अपरत्र—सम्यक् लिखितवान् इत्यर्थः, एवञ्च चरणलग्नमाबद्धाञ्जलिं मां चित्रितवान् आर्य्याञ्च लिखितवान् इति समुदितार्थः । आर्य्यां तन्नामच्छन्दोविशेषनिबद्धं श्लोकमित्यर्थः । इमां वक्ष्यमाणाम् ।

(ग) त्वामिति ।—अयम एषः, दासजनः भृत्यरूपो जनः, तवेति शेषः, आबद्धाञ्जलि कृतकरद्वयसंयोगं यथा स्यात् तथा, (क्रियाविशेषणम् । "तौ युतावञ्जलिः पुमान्" इत्यमरः) कृताञ्जलिः सन् इति भावः, तं मनसा सङ्कल्पितमित्यर्थः, इमं वक्ष्यमाणम, अर्थं प्रयोजनं, त्वां भवतीं, त्वत्समीपे इत्यर्थः, अर्थयते याचते । किमित्याशंसायामाह—मया सह सुरतव्यतिकरेण रमणव्यापारेण, खिन्नेव श्रान्ता सत्येव, स्वपिहि निद्रां याहि, एवम् अनेन प्रकारेण, सुरतखेदाभावेऽपि इति भावः, मा मा न न, स्वपिहीति शेषः ।

(घ) तेषु तेषु दिनेषु कारागारे विविधसुखदुःखाद्यालोचनादिवसेषु । उपचरितस्य आराधितस्य, कृतव्यवहारस्येत्यर्थः ।

(ङ) समगच्छे मिलितोऽभवम् । ("समो गम्यृ—" इति सूत्रेण सम्पूर्वक-गमधातोः आत्मने पदम्) ।

मुपलेभे। (च) सिंहघोषश्च कान्तकापचारं (छ) निर्भिद्य तत्पदे प्रसन्नेन राज्ञा प्रतिष्ठापितः तेनैव सुरङ्गापथेन कन्याऽन्तःपुरं मां पुनरनयत्। समगंसि चाहं शृगालिकामुखविवृतवार्त्तानुरक्तया (ज) राजदुहित्रा। अत्रान्तरे चण्डवर्म्मा सिंहवर्म्माऽवधतदुहितृप्रार्थनः कुपितः चम्पामवारुणत्, अजयच्च सिंहवर्म्माणं बलेन। अम्बालिकाञ्च बलात् स्वशिविरं नीत्वा 'क्षपान्ते विवाहः' इति कौतुकम् (झ) अबध्नाच्च। अहञ्च धनमित्रमवोचं, 'सखे! समापतितमङ्गनाथसहायं राजन्यबलं सुगूढं सम्भूय पौरवृद्धैस्तदुपावर्त्तय, ततश्च कृत्तशिरसमेव (ञ) ध्रुवं द्रक्ष्यसि' इति। तथा च तेनाभ्युपगते अहमस्य भवनमलक्ष्यशस्त्रः प्रविश्य अम्बालिकापाणिम् अग्नौ साक्षिणि आदित्समानस्य (ट) बाहुदण्डमाकृष्य क्षुरिकयोरसि प्रहृत्य अन्यांश्च कतिपयान् तत्सहायान् निहत्य हतविध्वस्तं तद्गृहमनुविचरन् वेपमानमधुरगात्रीं प्रियामाश्वास्य तदालिङ्गनसुखमनुबुभूषुस्तामादाय गर्भगृहमविशम्, अभवञ्च तव नवाम्बुवाहगम्भीरस्वरेण (ठ) अनुगृहीतः" इति।

---

(च) पुनरिति।—पुनः भूयः, प्राप्तः लब्धः, प्रभावः तपःशक्तिः येन तादृशम्। उपगम्य ज्ञात्वा। त्वद्गतिं तव गन्तव्यस्थानम्। उपलेभे ज्ञातवान्।

(छ) कान्तकापचारं कान्तकानुष्ठितापराधं, कन्याऽन्तःपुरगमनार्थं कारागृहेन धर्मरत्नापहारिणा तेन तस्करेण सम्मन्त्र्य तद्द्वारा सन्धिखननरूपमिति भावः।

(ज) समगंसि मिलितोऽभवम्। शृगालिकेति।—शृगालिकाया रागमञ्जरी-परिचारिकायाः, मुखेन विवृता प्रकटिता, या वार्त्ता मम वृत्तान्तः, तया अनुरक्तया तच्छ्रवणेन जातानुरागया।

(झ) क्षपान्ते निशाशेषे। कौतुकं मङ्गलसूत्रं, शुभविवाहसूचकहस्तसूत्रमिति यावत्. ("कौतुकन्त्वभिलाषे स्यात्...मङ्गले च कुतूहले। विवाहसूत्रगीतादिभोगयोरपि न द्वयोः॥" इति मेदिनी)।

(ञ) सुगूढं सुगुप्तं यथा तथा, शत्रुसैन्यानामलक्षितभावेनेत्यर्थः। सम्भूय मिलित्वा। उपावर्त्तय अस्मत्समीपमानय इत्यर्थः। कृत्तशिरसं छिन्नमस्तकम्।

(ट) अस्य चण्डवर्म्मणः। अलक्ष्यम् अदृश्यं, केनापि न दर्शनयोग्यमित्यर्थः, शस्त्रं यस्य तथाभूतः सन्। अग्नौ साक्षिणि वैवाहिकाग्निं साक्षीकृत्य। आदित्समानस्य जिघृक्षतः।

(ठ) वेपमानेति।—वेपमानं कम्पमानं, मधुरं रमणीयमित्यर्थः, गात्रं देहो

श्रुत्वा स्मित्वा च राजपुत्त्रः "कथं कार्कश्येन कर्णीसुतम् (ङ) अप्यतिक्रान्तः !!" इत्यभिधाय उपहारवर्माणं प्रति तद्वृत्तान्तवर्णने समादिदेश।

इति द्वितीयोच्छ्वासः।

---

## अथ तृतीयोच्छ्वासः।

---

## उपहारवर्मचरितम्।

स प्रणम्य अभ्यधत्त, "देव! अहमेकदा पर्य्यटन् विदेहेषु क्वचित् मठिकायां (क) विश्रमितुमेत्य काञ्चिदपि वृद्धतापसीमपश्यम्। तान्तु मद्दर्शनेनाश्रुमुखीमालोक्य 'किमेतत्?' इति मयोक्ता सकरुणम् अब्रवीत्—आयुष्मन्! मिथिलाधिपतिः प्रहारवर्मा नाम मगधराजस्य राजहंसस्य परं मित्रमासीत्। तयोश्च महादेव्यौ वसुमतीप्रियंवदे परस्परमप्रतिमं (ख) सख्यमादधाताम्। कदाचित् प्रथमगर्भाभिनन्दितां (ग) प्रियसखीं वसुमतीं दिदृक्षुः प्रियंवदा सह भर्त्रा पुष्पपुरमगमत्।

तस्मिन्नेव समये मालवेन मगधराजस्य महाजन्ये प्रवृत्ते मगधराजदुर्लक्ष्यां गतिमापन्नमवगम्य मैथिलः कथञ्चित् प्राणितः स्वविषयं (घ

---

यस्याः तादृशीम। अननुभूषुः अनुभवितुमिच्छुः सन्। गर्भगृहं गृहाभ्यन्तमध्यस्थकक्षं वा। नवाम्बुवाहगभीरस्वरेण नवीनजलधरध्वनिवत् गम्भीरकण्ठरवेण

(ङ) कार्कश्येन नैष्ठुर्य्येण। कर्णीसुतं चौरशास्त्रप्रवर्त्तकपुरुषविशेषम्।

---

(क) विदेहेषु मिथिलाप्रदेशेषु। मठिकायां क्षुद्रमठे।

(ख) तयोः मिथिला-मगधाधिपयोः। महादेव्यौ महाराज्ञ्यौ। अप्रतिमम् अतुलनीयम्।

(ग) प्रथमेति।—प्रथमः प्रथमसञ्जातः, यः गर्भः अन्तरपत्यता, तेन अभिनन्दिताम् अत्यर्थमानन्दिताम्।

(घ) मालवेन मालवाधीश्वरेण मानसारेण। महाजन्ये प्रबलयुद्धे ("युद्धमायोधनं जन्यम्" इत्यमरः)। दुर्लक्ष्यां दुर्ज्ञेयाम, असम्भाव्यामित्यर्थः, गतिं अवस्थां. युद्धे मगधराजः पराजितो भविष्यति इत्यस्य केनापि अतर्कितत्वादिति

गच्छन् पथि ज्येष्ठस्य पुत्रैर्विकटवर्मप्रभृतिभिराक्रान्तं राज्यमुपलभ्य स्वस्रीयात् सुह्मपतेर्बलमादित्सुरटवीपथमवगाहमानः लुब्धकलुप्तसर्वस्वः (ङ) अभूत्। अहञ्च कनीयसा तत्सुतेन हस्तवर्त्तिना वनचरशरपतनत्रस्ता वनमवगाह्य (च) केनचित् शार्दूलेनाक्रान्ता निपतिता। मत्पाणिभ्रष्टश्च स बालः कस्यापि गोशवस्य क्रोड़मभ्यशेयत। सहसा तस्मिन् व्याघ्रे शवरशरेण निहते स बालकः शवरदारकैरपहृतः, अहञ्च मोह-विकलः केनचित् पशुपालेन स्वकुटीरं नीत्वा सुस्थीकृता स्वभर्त्तु-रन्तिकगमनाय यावद् यते (छ) तावत् मद्दुहित्रा केनापि यूना सह तमुद्देश-मागता।

सा रुदती स्वहस्तगतस्य राजपुत्रस्य किरातहस्तगमनम्, आत्मनश्च केनापि आरोग्यविधानं स्वशुश्रूयाश्च पुनस्तेनोपयन्तुमिष्टाया निकृष्टजातिसंसर्ग-वैक्लव्यात् प्रत्याख्यानं, तद्रुषेण च तेन निर्जने वने स्वशिरःकर्त्तनोद्यमम्, अमुना च यूना सहसोपनीतेन तस्य दुरात्मनो हननम् आत्मनश्च उपयमनम् (ज) अकथयत्। स च पृष्टः मिथिलेन्द्रस्यैव कोऽपि सेवकः

---

भावः; यद्वा—दुर्लङ्घ्यां गतिं सारथिहीनत्वात् उच्छृङ्खलतया धावमानाश्वैः निबिड़ारण्यमध्ये आनयनात् अन्यैरलक्षितां गतिमित्यर्थः। प्राणितः अतिक्लेशेन लब्ध-जीवनः। स्वविषयं निजदेशं, ("देशविषयौ तूपवर्त्तनम्" इत्यमरः)।

(ङ) स्वस्रीयात् भागिनेयात्, भगिनीपुत्रादित्यर्थः, ("स्वस्रीयो भागिनेयः" इत्यमरः)। सुह्मपतेः सुह्मनामकदेशाधिराजात्। बलं सैन्यं, सैन्यसाहाय्यमित्यर्थः। अटवीपथम् अरण्यमार्गम्। अवगाहमानः प्रविशन्। लुब्धकेति।—लुब्धकैः व्याधैः, लुप्तम् अदर्शनं प्रापितं, बलपूर्वकं गृहीतमित्यर्थः, सर्वस्वं समस्तधनं यस्य तादृशः।

(च) वनेति।—वनचराणां व्याधानां, शरपतनात् बाणपतनात्, त्रस्ता भीता। अवगाह्य प्रविश्य।

(छ) शवरशरेण व्याधबाणेन। शवरदारकैः व्याधबालकैः। स्वभर्त्तुः निजप्रभोः, मिथिलाधिपस्येत्यर्थः। यते चेष्टे।

(ज) किरातहस्तगमनं व्याधकरनिपतनम्। तेन येन आरोग्यः कृतः तेन। उपयन्तुं परिणेतुम्। इष्टाया अभिलषितायाः। निकृष्टेति।—निकृष्ट-जात्या नीचजात्या, किरातेनेति यावत्, यः संसर्गः सहवासः, तेन वैक्लव्यात्

कारणविलम्बी तन्मार्गानुसारी (झ) जातः। ततस्तेन सह आवां भर्त्तुरन्तिकमुपेत्य पुत्रयोर्वृत्तान्तेन तं राजानं प्रियंवदाश्च नितरां व्यथयामासिव। (ञ) स च राजा दुर्दैवात् ज्येष्ठभ्रातृपुत्रैश्चिरं विगृह्य (ट) बद्धः देवी च बन्धनं नीता। हतभाग्याऽहं जीवितमपारयन्ती हातुं प्रव्रज्याम् (ठ) आश्रयम्। दुहिता तु मम अगत्या (ड) विकटवर्ममहिषीं कल्पसुन्दरीमशिश्रियत्। तौ चेद्राजसुतौ निर्बाधमजीविष्यताम् इयता कालेन तवेमां वयोऽवस्थामास्यताम्। (ढ) तयोश्च सतोर्दायादा (ण) नरेन्द्रस्य नेदृशीं दशां घटयेयुः' इत्युक्त्वा प्रबद्धबाष्पमरोदीत्।

तदाकर्ण्याहमपि बाष्पमुत्सृजन्नब्रवं, 'मातः! समाश्वसिहि, यस्ते हस्तात् प्रच्युतो बालः स केनचित् मुनिना लब्धः संवर्द्धितश्च। वार्त्तेयं महती, (त) किमनया, सोऽहम्। मया च असौ विकटवर्मा कथमपि निहन्तुं शक्यः। नास्मिहत्यः कश्चिदपि ईदृक्तया नो जानाति, पितरावपि न संविदाते किमुतान्ये? तदेनमर्थमुपायेन (थ) साधयिष्यामि' इति।

---

विह्वलताहेतोः, असहिष्णुताहेतोरित्यर्थः। प्रत्याख्यानं निराकरणम्, असम्मतिप्रकाश इत्यर्थः। तदक्षमेण प्रत्याख्यानासहिष्णुना। तेन प्रत्याख्यातकिरातेन। अमुना सङ्गतेन धनेन। उपयमनं विवाहम्।

(झ) कारणविलम्बी केनचित् हेतुना कृतसमयातिक्रमः। तन्मार्गानुसारी मिथिलेन्द्रस्यैव पश्चादनुसरणकारी।

(ञ) व्यथयामासिव पीडयामासिव, पीडितं पीडितञ्च अकाव इत्यर्थः।

(ट) चिरं दीर्घकालम्। विगृह्य युद्धं कृत्वा। (ठ) हातुं त्यक्तुम्। प्रव्रज्यां सन्न्यासम्।

(ड) अगत्या उपायान्तराभावात्। (ढ) निर्बाधं निर्विघ्नम्। इयता एतावता। आस्याताम् अलप्स्याताम्।

(ण) तयोः कुमारयोः। सतोः वर्त्तमानयोः, जीवतोरित्यर्थः। दायादाः ज्ञातयः, विकटवर्मादयः भ्रातृपुत्रा इति यावत्।

(त) महती अनल्पा, अतिविस्तृता इत्यर्थः। (थ) इह अस्मिन् स्थाने भवः इति इहत्यः एतन्नगरवासीत्यर्थः। ईदृक्तया ईदृशरूपेण, लब्धपितराजपुत्र-

वृद्धा सरुदितं परिष्वज्य प्रस्नुतस्तनी सगद्गदमगदत्, वत्स जीव, अद्य सुप्रसन्नो विधिः, अद्यैव प्रहारवर्मणि अधि )जाताः । अहो ! महत् भाग्यं देव्याः प्रियंवदायाः' इति सहर्षं स्नानभोजनादिना समुपाचरत् । रात्रौ कटशय्या- विनोपधिमयमर्थो न साध्यः, स्त्रियश्चोपधीनां महत् चैत्रम्, (घ) वृत्तान्तमस्या अवगम्य तद्द्वारेण किञ्चिदारचयिष्यामि' ायत एव मे सा त्रियामा व्ययासीत्, उदगाच्च भगवान् तिः । (न)

च मयि अवसितदिनमुखविधौ (प) तां तापसीं 'मातः ! : कच्चिदन्तःपुरवृत्तान्तमवगच्छसि ?' इति वदति एव ा प्रत्यदृश्यत । तामालोक्य सहर्षास्रं 'पुत्रि पुष्करिके ! ारकम्, अयमसावक्षपया मया वने परित्यक्तः पुनरप्येव- इति वदन्त्यां तस्यां मे धात्रीं सा हर्षनिर्भरनिपीडिता

---

संविदाते अवगच्छतः, ("समो गम्यृ—" इत्यादिसूत्रेण सम्पूर्वकविद- ःम )। किमुत किं पुनः । एनमर्थं विकटवर्माण हत्वा प्रियो- न प्रयोजनम् । उपायेन कौशलेन इत्यर्थः ।

रिष्वज्य समालिङ्ग्य । प्रस्नुतस्तनी वात्सल्योदयात् स्तनात् क्षरद्दुग्धा ारवर्मणि अधि प्रहारवर्मणः अधीना इत्यर्थः, ("यस्मादधिकं यस्य ा सप्तमी" इति सप्तमी )। विदेहाः विदेहवासिनः ।

टशय्यां किलिञ्जशयनं, तनुतया विदारितवंशखण्डादिविरचितशय्या- ("कटः किलिञ्जकः" इत्यमरः )। विनोपधिम् उपधिं कपटं, ("कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे" इत्यमरः )। महत् चैत्रम् ।

षाः वृद्धायाः, वृद्धासकाशादित्यर्थः । तद्द्वारेण अन्तःपुरवृत्तान्तज्ञान- ःचयिष्यामि विधास्यामि, आचरिष्यामीत्यर्थः । त्रियामा रात्रिः । क्षत् । सहस्रदीधितिः सहस्रकिरणः, सूर्य इत्यर्थः ।

वितेति ।—अवसितः समापितः, दिनमुखस्य प्रत्यूषस्य, विधिः विधानं येन तस्मिन् ।

चिरं प्रहृष्य निलय सान्त्विता मया राजान्तःपुरवृत्तान्तमाचख्यौ, (फ) 'कुमार! कामरूपेश्वरस्य कलिन्दवर्मणः कन्या कल्पसुन्दरी नाम कलासु रूपे च अप्सरसोऽप्यतिक्रान्ता पतिमभिभूय वर्त्तते, पतिस्तु बह्ववरोधोऽपि तदेकवल्लभः' (ब) इति।

तदाकर्ण्याहं तत्रैवापसर्पभूतया राजमहिष्याः भर्त्तरि द्वेषं क्रमेण कौशलेन सम्पाद्य आत्मनः प्रतिकृतिमभिलिख्य मन्मात्रा तस्यै मत्त-काशिन्यै (भ) प्रहितवान्। सा तु चित्रीयमाणा (म) तदवलोक्य 'ईदृशं सौन्दर्य्यं देवेऽपि कुसुमसायके न सन्निवत्ते, कोनेदमालिखितम्?' इति समादृतवती। दृष्ट्वा सा मम धात्री सस्मितमवादीत्, 'देवि! सदृशमालापयसि, भगवान् मकरकेतुरेवं सुन्दर इति न शक्यते वक्तुं, तत् यदि ईदृशः पुमान् स्यात् स किं लभ्यते?' (य) इति। तयोक्तम्, "अम्ब! किमुच्यते, शरीरं जीवितं हृदयमिति, सर्वमेतदत्यल्पमनर्हञ्च, (र) ततो न किञ्चिल्लभ्यते? न चेदयं विप्रलम्भः (ल) तदमुष्य दर्शनानुग्रहेण यथा

(फ) सहर्षाख्यं सानन्दाश्रु यथा तथा। हर्षनिर्भरनिपीड़िता आनन्दाति-शय्येन अभिभूता। आचख्यौ वर्णयामास।

(ब) कलासु चतुःषष्टिविधशिल्पविद्यासु। अभिभूय पराजित्य, वशी-कृत्येत्यर्थः, पतिं प्रति आधिपत्य विस्तार्य्येति भावः। बह्ववरोधोऽपि बहुदारोऽपि, बहुस्त्रीकोऽपीत्यर्थः, ("अवरोधस्तिरोधाने राजदारेषु तद्गृहे" इति मेदिनी)। तदिति।—सा कल्पसुन्दरी एव, एका केवला, वल्लभा प्रियतमा यस्य तादृशः।

(भ) तत्रैव तापस्याः कन्यया पुष्करिकयैव। अपसर्पभूतया चारस्वरूपया। मन्मात्रा मम धात्र्या, वृद्धतापस्या इत्यर्थः। तस्यै कल्पसुन्दर्य्यै। मत्तकाशिन्यै वरवर्णिन्यै, सुन्दरीषु श्रेष्ठायै इत्यर्थः, ("वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी" इत्यमरः)।

(म) सा कल्पसुन्दरी। चित्रीयमाणा आश्चर्य्यं मन्यमाना, विस्मयाधिक्यात् चित्रवत् आचर्य्यमाणा इत्यर्थो वा।

(य) सदृशम् उचितम्। लभ्यते? प्राप्यते?।

(र) शरीरमिति।—शरीरं जीवितं हृदयं लभ्यते इत्यन्वयः। अनर्हञ्च अयोग्य, तस्येति शेषः।

(ल) [illegible] मिथ्येति यावत्।

चक्षुश्चरितार्थं स्यात् तथा कार्य्यम् इति। अन्यच्चातिगोप्यं कथयामि, मम तातस्य राज्ञा प्रहारवर्मणा परं सख्यमासीत्, मातुश्च मे मानवत्या देवी प्रियंवदा सखी आसीत्, ताभ्यां पुनरजातापत्याभ्यां समयः (व) कृतः, 'आवयोः पुत्त्राय दुहितृमत्या दुहिता देया' इति। तातस्तु मां जातां प्रनष्टपुत्त्रा (श) प्रियंवदेति विकटवर्मणे दत्तवान्। अयन्तु निष्ठुरः कामोपचारेषु अविचक्षणः मृषावादी (ष) न रोचते मे भर्त्ता। परलोकभयञ्चैहिकेन अन्तरितम्, अतोऽमुना यूना मामद्य श्वो वा समागमय' (स) इति। तदाकर्ण्य सा मदन्तिकमेत्य तत् सर्वं निवेद्य 'अतःपरं भर्त्तृदारकः प्रमाणम्' इत्युक्त्वा विरराम।

ततोऽहं तन्मुखात् राजमन्दिरसंविभागं सम्यक् ज्ञात्वा तां पुष्करिकां कृतसङ्केतां (ह) राजमहिष्याः सन्निधौ सम्प्रेष्य निशायां शयनगतो व्यचिन्तयं, 'सिद्धप्राय एवायमर्थः, किन्तु परदारपरामर्शात् धर्मव्यतिक्रमः स्यात्, स चार्थकामयोर्द्वयोरधिगमे नीतिं न बाधते, प्रत्युत (क) पित्रोरुद्धारसम्पादनेन

---

(व) अतिगोप्यम् अत्यन्तं गोपनीयविषयम्, अन्येन केनापि अज्ञातमित्यर्थः। ताभ्यां मानवतीप्रियंवदाभ्याम। अजातेति।—अजाते अनुत्पन्ने, अपत्ये सन्ताने ययोस्ताभ्याम्, अपत्योत्पत्तेः प्रागेवेत्यर्थः। समयः शपथः, ("समयः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः)।

(श) प्रनष्टपुत्त्रा मृतपुत्त्रा अपहृतपुत्त्रा वा, ("नशः षान्तस्य" इति सूत्रेण प्रनष्टेत्यत्र णत्वाभावः)।

(ष) कामोपचारेषु अनङ्गक्रीडादिव्यापारेषु। अविचक्षणः अनभिज्ञः। मृषावादी मिथ्याभाषणशीलः।

(स) ऐहिकेन इह जगति अनुभूयमानेन, दुःखेनेति शेषः। अन्तरितं तिरोहितं, दूरीभूतमित्यर्थः। समागमय संयोजय।

(ह) राजमन्दिरसंविभागं राजभवनस्य सन्निवेशक्रमम्। कृतेति।—कृतः कथित इति भावः, सङ्केतः अभिसरणस्थानं यया यस्यै वा तादृशीम।

(क) सिद्धप्रायः प्रायशः सफलः। अयमर्थः पित्रोः बन्धनमोचन-कल्पसुन्दरीलाभरूपप्रयोजनमित्यर्थः। परदारपरामर्शात् परस्त्रीसंसर्गात्। धर्मव्यतिक्रमः धर्मलङ्घनम्, अधर्म इत्यर्थः। सः धर्मव्यतिक्रमः। अधिगमे लाभे। नीतिं न्यायं, न बाधते न लङ्घयति, नीतिशास्त्रेण सह न विरोधमावहतीत्यर्थः। प्रत्युत वैपरीत्येन।

महान्तं धर्ममावहति। एतदाकर्ण्य देवो राजवाहनः सुहृदो वा किं वक्ष्यन्ति' इति चिन्तापर एव निद्रामभजे ; दृष्टश्च स्वप्ने भगवान् भर्गः (ख) प्राह, 'सौम्य उपहारवर्मन्! मा अत्र संशयः कार्य्यः, त्वं मदंशः, असौ च मत्तकाशिनी सुरसरित्, अमूं कदाचित् गणपतिः जलक्रीड़ां कुर्वन्नवातरत्, सा तु सपत्नीतनयविहितां विलोड़नाममहमाना तमशपत् 'एहि मर्त्यत्वम्' (ख) इति। सोऽपि अहेतुकशापप्रदानात् कुपितस्तां शशाप, 'यथा इह बहुभोग्या तथा प्राप्यापि मानुष्यकमनेकसाधारणी (ग) भव' इति। इत्थं प्रतिशप्ता सा सुदुःखिता मामेत्य सगद्गदमगदत्, 'नाथ! भवच्चरणनिरताऽहं गजाननेनेत्थं शप्ता।' तदाकर्ण्य सकृपेण मयोक्तं, 'प्रिये! न अस्य शापोऽन्यथा भवेत्, परमहं त्वदनुग्रहार्थं द्विधा भूत्वा (घ) विकटवर्मोपहारवर्मरूपाभ्यां मर्त्यलोकेऽवतरिष्यामि। त्वं कामरूपेश्वरस्य कन्या कल्पसुन्दरी नाम भूत्वा ज्यायसा मदंशेन विकटवर्मणा किञ्चित् कालं सङ्गता ततस्तस्मिन् स्वमूर्त्ताविव लयमुपगते उपहारवर्मणा मत्कनिष्ठेनांशेन साकं (ङ) चिरं विविधसुखमनुभविष्यसि।' तदयमर्थो भव्यः, (च) मा अत्र शङ्का कार्य्या' इति।

---

(ख) भर्गः हरः, महादेवः इत्यर्थः, ("हरः स्मरहरो भर्गः" इत्यमरः)। अत्र कल्पसुन्दरीलाभविषये। असौ कल्पसुन्दरी। सुरसरित् देवनदी गङ्गा, गङ्गा एव मानवीरूपेण अवतीर्णा इत्यर्थः। अमूं सुरसरितम्। अवातरत् अवतीर्णवान्। सपत्नीति।—सपत्न्याः पार्वत्याः, तनयेन पुत्रेण गणेशेन, विहितां कृताम्। विलोड़नाम आलोड़नम्, अवगाहनमित्यर्थः। असहमाना सोढुमशक्ता। एहि प्राप्नुहि इत्यर्थः। मर्त्यत्वं मानवत्वं, मनुष्यजन्म इत्यर्थः।

(ग) सः गणपतिः। इह सुरलोके। बहुभोग्या सर्वजनोपभोग्या, गङ्गायां सर्वसाधारणानामवगाहनात् निपवनत्वाच्चेति भावः। मानुष्यकं मानुषभावम्। अनेकेति।—अनेकेषां बहुजनानां, साधारणी तुल्या, समानोपभोग्या इत्यर्थः।

(घ) द्विधा भूत्वा आत्मानं शरीरद्वयेन विभज्य इत्यर्थः।

(ङ) ज्यायसा ज्येष्ठेन, प्रथमावतीर्णेनेत्यर्थः। तस्मिन् विकटवर्मणि। स्वमूर्त्तौ निजद्वितीयरूपे, उपहारवर्मरूपद्वितीयशरीरे इत्यर्थः। लयम् अदर्शनं, तिरोभावमित्यर्थः। उपगते प्राप्ते। साकं सह।

(च) अयमर्थः कल्पसुन्दर्या समागमः विकटवर्मणो विनाशरूपश्च वस्तु। भव्यम् अवश्यम्भावीत्यर्थः।

अहञ्च तत्क्षणप्रतिबुद्धः कथञ्चित् तदहर्गमयित्वा समागतायां निशायां सञ्चरत्सु तिमिरेषु नीलनिवसनः खड्गपाणिः मातृनिर्दिष्टान्तःपुरसन्निवेशस्मरणेन सौत्साहं पूर्वसङ्केतितं माधवीलतामण्डपं प्रविश्य कान्तया सह समगंसि। (छ) कृतालिङ्गनश्च तां विशाललोचनामनर्गलकलप्रलापिनीं यथाकाममरीरमम्। (ज) ततश्च मां निर्यान्तम् (झ) आलोक्य सा दीनानना सवाष्पमाचष्ट, 'नाथ! यदि प्रयासि, प्रयातं मे जीवितं गणय, नय मामपि यथा ते रोचते' इति कृताञ्जलिं तामवादिषं, 'प्रिये! कः पुमान् ईदृशीं कामिनीं न कामयते? (ञ) यदि मयि अनुरागस्ते निश्चलः, तदाचराविचारं मदुपदिष्टम्; दर्शय राज्ञे मच्चित्रपटम्, आचक्ष्व च 'किमियमाकृतिः सौन्दर्यस्य परां कोटिमारूढा (ट) न वा?' इति। 'बाढम्' (ठ) इति स नियतं वक्ष्यति। पुनश्च ब्रूहि, 'यदि एवम्, अस्ति काऽपि तापसी नानादेशभ्रमणलब्धवैदग्ध्या (ड) मन्मातृभूता, तया इदमालेख्यरूपं प्रदर्श्य अहमुक्ता, 'पुत्रि! अस्ति तादृगुमन्त्रः, येन त्वमुपोषिता पर्वणि विविक्तायां भूमौ पुरोहितैर्हुतमुक्ते हुताशने नक्तमेकाकिनी

---

(छ) तत्क्षणे तस्मिन्नेव समये, स्वप्नदर्शनात् परक्षण एव इत्यर्थः। प्रतिबुध्य जागरित्वा। गमयित्वा अतिवाहयित्वा। सञ्चरत्सु समागच्छत्सु, सञ्जातेषु इत्यर्थः। तिमिरेषु अन्धकारेषु। नीलनिवसनः कृष्णवर्णवस्त्रपरिहितः। मात्रेति।—माता जननी, धात्री इत्यर्थः, निर्दिष्टः कथितः इत्यर्थः, यः अन्तःपुरसन्निवेशः अवरोधसंस्थानं, तस्य स्मरणेन स्मृत्या। समगंसि सङ्गतोऽभूवम्।

(ज) अनर्गलेति।—अनर्गलं निरन्तरं, कलम् अव्यक्तमधुरं, प्रलपति भाषते इति तादृशीम्। अरीरमं रमणमकार्षम्।

(झ) निर्यान्तं प्रतिष्ठमानं, प्रस्थानोन्मुखमित्यर्थः।

(ञ) ईदृशीम् एवंविधां, त्वत्तुल्यामित्यर्थः। कामयते? प्रार्थयते?।

(ट) आचक्ष्व कथय। परां कोटिं परमोत्कर्षम्, ("अत्युत्कर्षाश्रयः कोट्यः" इत्यमरः)। आरूढा प्राप्ता इत्यर्थः।

(ठ) बाढं भृशम्, अत्यर्थमित्यर्थः, निश्चयमिति यावत्, यद्वा—बाढं प्रतिज्ञाने, स्वीकरोमीत्यर्थः, ("भृशप्रतिज्ञयोर्बाढम्" इत्यमरः)।

(ड) नानेति।—नानादेशे भ्रमणेन विचरणेन, लब्धं प्राप्तं, वैदग्ध्यं पाण्डित्यं, विविधविषये अभिज्ञता इत्यर्थः यया तादृशी।

शतं चन्दनसमिधः शतमगुरुकाष्ठानि कर्पूरमुष्टीः (ढ) पट्टवस्त्राणि च हुत्वा भविष्यस्येवमाकृतिः। ततश्चालयिष्यसि घण्टां, घण्टारवाऽऽहूतश्च भर्त्ता तुभ्यं सर्वं रहस्यमाख्याय निमीलिताक्षो यदि त्वामालिङ्गेत् इयमाकृतिस्तमुपसङ्क्रामेत्, त्वन्तु यथापुराऽऽकृतिरेव (ण) भविष्यसि। यदि भवत्यै राज्ञे च एवं रोचेत तदा अविचारमिदमनुष्ठीयतां, न अत्र विसंवादशङ्का (त) कार्य्या' इति। अतो वपुश्चेदिदं तवाभिमतं, सह सुहृद्भिः मन्त्रिभिः पौरवर्गैश्च सम्मन्त्र्य तदनुमतेन कर्मणि अस्मिन् अभियुज्यताम्'(थ) इति।

स नियतमभ्युपैष्यति। ततश्च त्वं कृतकनर्मस्मिता विकटवर्मणः कर्णे एवमालपिष्यसि 'धूर्त्त! त्वमकृतज्ञः, मदनुग्रहलब्धेनापि रूपेण लोकलोचनोत्सवायमानेन मत्सपत्नीरभिरमयिष्यसि, न अहमात्मविनाशाय वेतालोपयमनमाचरेयम्' (द) इति। श्रुत्वैदं त्वद्वचः स यत् वदिष्यति तन्मह्यं ज्ञापयिष्यसि। साम्प्रतं मत्पदचिह्नानि च उपवने पुष्करिकाय

---

(ढ) येन मन्त्रेण। उपोषिता कृतोपवासा। पर्व्वणि अमावस्यायां तिथौ विविक्तायां जनशून्यायां विशुद्धायां वा। हुतमुक्ते आदौ हुतः कृतहोमः, पश्चा मुक्तः परित्यक्तः तस्मिन्। चन्दनसमिधः श्वेतचन्दनकाष्ठानि। कर्पूरमुष्टि पलमितान् मुष्टिपरिमितान् वा कर्पूरान्. ("मुष्टिर्द्वयोः पले" इति मेदिनी)।

(ण) चालयिष्यसि आन्दोलयिष्यसि, वादयिष्यसीत्यर्थः। घण्टेति।—घण्टारवेण घण्टाध्वनिना, आहूतः कृताह्वानः, घण्टारवश्रवणेन समागत इत्यर्थः। रहस्यं गोपनीयवृत्तान्तम्। भर्त्ता तव पतिः। इयमाकृतिः चित्रस्था मूर्त्तिः तं तव पतिम्। उपसङ्क्रामेत् सञ्चरेत्। यथापुराऽऽकृतिः पूर्वं ते यथा आका स्यात् तादृश्येव आकृतिरित्यर्थः।

(त) अत्र एवं मूर्त्तिपरिवर्त्तनविषये। विसंवादशङ्का विप्रलम्भसंशय प्रतारणापूर्णव्यापार इति सन्देह इत्यर्थः। ("विप्रलम्भो विसंवादः" इत्यमरः)।

(थ) अभिमतं सम्मतं, मनोनीतमित्यर्थः। तदनुमतेन सुहृदमात्यादी सम्मतिक्रमेण। अभियुज्यतां प्रवर्त्यतामित्यर्थः।

(द) कृतेति।—कृतं प्रकटितं, प्रदर्शितमित्यर्थः, कृतकं कृत्रिमं, नर्मणि परिहासहास्यं यया तादृशी सती। लोकेति।—लोकानां जनानां, लोचन नेत्रयोः, उत्सवायमानेन आनन्दमुत्पादयता। अभिरमयिष्यसि सुरतक्री

प्रमार्जय’ (ध) इति। सा ‘तथा’ इति शास्त्रोपदेशमिव मदुक्तमादृत्य अत्यप्रसुरतरागेव कथमप्यन्तःपुरमगात्। अहमपि यथापूर्वं (न) निर्गत्य स्वमावासं प्रत्ययासिषम्।

अथ सा तथैव तमर्थमन्वतिष्ठत्। अतिष्ठच्च स दुर्मतिः तन्मते, अभ्रमच्च पौरजानपदेषु (प) इयमद्भुतायमाना वार्त्ता, बृहस्पतिप्रतिमबुद्धिभिरपि मन्त्रिभिः अनुमोदितं, ‘यद्येवं नान्यदतःपरमस्ति किमप्यद्भुतम्, अचिन्त्यो मणिमन्त्रौषधीनां प्रभावः’ इति प्रसृततरेषु लोकवादेषु प्राप्ते पर्वदिवसे प्रगाढ़ायां तिमिरनिपीड़ितायां प्रदोषवेलायाम् अन्तःपुरोद्यानादुदगमत् महान् धूमसञ्चयः। (फ) चोराज्यदधितिलगौरसर्षपवसामांसरुधिराहुतीनां परिमलः पवनानुसारी दिशि दिशि प्रावासीत्। अथ प्रशान्ते च तस्मिन् धूमोद्गमे गृहोद्यानम् (ब) अहमगमम्, आगमच्च सा गजगामिनी; आलिङ्ग्य मां सस्मितमभाषत, ‘धूर्त्त! सिद्धं ते समीहितम्, अवसितश्च पशुः (भ) असौ। अमुष्योपप्रलोभनाय त्वदादिष्टया दिशा मयोक्तं, ‘कितव! न सावयामि सौन्दर्य्यं, त्वमिदं-सुन्दरी भूत्वा अप्सरसामपि स्पृहणीयो भविष्यसि किमुत मानुषीणां, मधुकर इव निसर्ग-

---

सन्तोषयिष्यामि। वेतालोत्थापनं भूतविशेषोत्पादनम्। आचरेयम् अनुतिष्ठेयं, कुर्य्यामित्यर्थः।

(ध) प्रमार्जय प्रोञ्छय, विलोपयेत्यर्थः। (न) यथापूर्वं पूर्वानुरूपं, येन क्रमेण आगतः तेनैव क्रमेणेत्यर्थः।

(प) अभ्रमत् प्राचरत्, प्रचारिताऽभवदित्यर्थः। पौरजानपदेषु पुरवासिषु नगरवासिषु च।

(फ) अचिन्त्यः चिन्तयितुमशक्यः, दुर्ज्ञेय इत्यर्थः। प्रसृततरेषु अत्यर्थं विस्तृतिं गतेषु। प्राप्ते समागते। पर्वदिवसे अमावस्यायां तिथौ। तिमिरनिपीडितायाम् अन्धकारावृतायाम्। प्रदोषवेलायां निशामुखसमये। उदगमत् उद्गतवानित्यर्थः। धूमसञ्चयः धूमराशिः।

(ब) गृहोद्यानं गृहसंलग्नमुपवनम्।

(भ) सिद्धं सफलम्। समीहितं चेष्टितम्, अभिलाष इति यावत्। अवसितः अवसानं गतः, विनष्ट इत्यर्थः। पशुः पशुवत् निर्बोधः इत्यर्थः।

चापलात् यत्र क्वचिदासज्जति (म) भवादृशो जनः' इति। तत्र तु पादयार्निपत्याभिहितं, 'प्रिये ! क्षमस्व मत्कृतानि दुष्कृतानि, मनसा अपि न अतःपरं चिन्तयेयम् अपरनारीः, त्वरस्व प्रकृते (य) कर्मणि' इति।' एवमालपन्तीं तां समालिङ्ग्य पुनःपुनश्चुम्बित्वा 'इहैव कुरुवकगुल्मगर्भे तिष्ठ यावदहं साधयेयं (र) कार्य्यम्' इति विसृज्य उपसृत्य च होमप्रदेशं घण्टामचालयम्; अकूजच्च सा तं जनं कृतान्तदूतीव (ल) आह्वयन्ती, आयासीच्च राजा तं देशम्। अगुरुचन्दनानि जुह्वतं मां दृष्ट्वा शङ्कापन्नमिव तं सविस्मयं विचार्य्य तिष्ठन्तमब्रवं, 'ब्रूहि सत्यं भूयोऽपि भगवन्तं चित्रभानुं (व) साक्षीकृत्य न चेदनेन रूपेण मत्सपत्नीरभिरमयिष्यसि, ततस्त्वयि इदं रूपं सङ्क्रामयेयम्' इति। स तदैव 'दैव्येवेयं नोपधिः' (श) इति सञ्जातप्रत्ययः शपथाय प्रावर्त्तत। ततः स्मित्वा पुनर्मयोक्तं, 'कथय कानि ते रहस्यानि, तत्कथनान्ते च त्वत्स्वरूपभ्रंशः' (ष) इति।

सोऽब्रवीत्, 'अस्ति बड्डो मत्पितुः कनीयान् भ्राता प्रहारवर्मा, तं विषान्नेन व्यापाद्य अजीर्णदोषं ख्यापयेयमिति मन्त्रिभिः सहाध्यवसि-

---

(म) दिशा मार्गेण, रीत्या इत्यर्थः। साधयामि सम्पादयामि। निसर्गचापलात् स्वाभाविकचाञ्चल्यात्। आसज्जति आसक्तो भवति।

(य) प्रकृते प्रस्तुते, प्रक्रान्ते इत्यर्थः, चिकीर्षिते इति यावत्।

(र) कुरुवकेति।—कुरुवकाणाम् अरुणपुष्पझिण्टीनां, ("सैरीयकस्तु झिण्टी स्यात् तस्मिन् कुरुवकोऽरुणे" इत्यमरः) गुल्मस्य स्तम्बस्य, गुच्छस्येत्यर्थः, ("अप्रकाण्डे स्तम्बगुल्मौ" इत्यमरः) गर्भे अभ्यन्तरे। साधयेयं सम्पादयेयम्।

(ल) होमप्रदेशं यत्र होमः कृतः तत्स्थानम्। अकूजत् अध्वनत्। सा घण्टा। तं जनं विकटवर्माणम्। कृतान्तदूतीव यमदूतीव।

(व) जुह्वतम् आहुतिं ददानम्। चित्रभानुम् अग्निम्, ("अग्निर्वैश्वानरो वह्निः···चित्रभानुर्विभावसुः" इत्यमरः)।

(श) उपधिः कपटः, छलनेत्यर्थः, ("कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे" इत्यमरः)।

(ष) त्वत्स्वरूपभ्रंशः तव स्वाभाविकाकारस्य अन्यथाभावः, चित्रदृष्टरूपप्राप्तिरिति भावः।

तम् । (स) अनुजाय विशालवर्मणे दण्डचक्रं पुण्ड्राभियोगाय दित्सितम् । (ह) पौरवृद्धः पाञ्चालिकः परिव्रातश्च सार्थवाहः खलतिनाम्नो यवनात् वज्रमेकं वसुन्धरामूल्यं लघीयसा मूल्येन लभ्यमिति ममैकान्तेऽमन्त्रयेताम् । (क) गृहपतिश्च ममान्तरङ्गभूतो जनपदमहत्तरः शतहलिरलीकवादशीलमवलेपवन्तं दुष्टग्रामण्यमनन्तसीरं जनपदकोपेन घातयेयमिति दण्डधरानुद्धारकर्मणि मत्प्रयोगान्नियोक्तुमभ्युपागमत् । (ख) इत्थमिदमचिरं

---

(स) विषान्नेन विषमिश्रभोज्येन । व्यापाद्य विनाश्य । अजीर्णदोषम् अजीर्णजनितविसूचिकादिरोगेण मृतमित्यर्थः । ख्यापयेयं प्रचारयेयम् । अध्यवसितं निश्चयीकृतं, मन्त्रयित्वा स्थिरीकृतमित्यर्थः ।

(ह) दण्डचक्रं सैन्यसमूहम् । पुण्ड्राभियोगाय पुण्ड्रदेशाक्रमणाय । दित्सितं दातुमिष्टम् ।

(क) पाञ्चालिकः तन्नामा पुरवासिषु कश्चित् वृद्धः । परिव्रातः कस्या अपि विपदः परिरक्षितः । सार्थवाहः कश्चित् वणिक्, तन्नामा कश्चित् जनो वा । वज्रं हीरकम् । वसुन्धरामूल्यं वसुन्धरा पृथिवी एव, मूल्यं यस्य तादृशं, सर्वपृथिवीविनिमयेनापि सङ्ग्राह्यमित्यर्थः, महामूल्यमिति यावत् । लघीयसा अत्यल्पेन । मम मया सह इत्यर्थः (सम्बन्धविवक्षया षष्ठी) । अमन्त्रयेतां मन्त्रणाम् अकुरुताम् ।

(ख) गृहपतिः गृहस्थः, ("भवेत् गृहपतिः पुंसि गृहस्थेऽपि च सत्रिणि" इति मेदिनी) । अन्तरङ्गभूतः द्वितीयहृदयस्वरूपः, अतीव विश्वासभाजनमित्यर्थः । जनपदमहत्तरः जनपदे देशमध्ये इत्यर्थः, महत्तरः अतिमहान्, नागरिकश्रेष्ठ इत्यर्थः । शतहलिः शतसङ्ख्यकलाङ्गलेन कृषिकर्मकारीत्यर्थः । अलीकवादशीलं निरन्तरमिथ्याभाषिणं, शतहलेः प्राधान्येन सेर्ष्यः सन् लोके वृथाऽपवादप्रचारकमिति भावः । अवलेपवन्तम् अहङ्कारिणम् । दुष्टग्रामण्यं दुराचारं ग्रामाध्यक्षं, प्रहारवर्मणि सानुरागमिति भावः । अनन्तसीरं तन्नामानं कमपि जनम् । जनपदकोपेन देशवासिनां क्रोधेन, दुःशीलतया जनपदवासिषु कोऽपि तस्मिन् न सन्तुष्ट इति प्रख्याप्य इति भावः । घातयेयं नाशयेयम् । इति एवं मन्त्रयित्वा । दण्डधरान् रक्षिकपुरुषान्, दण्डव्यापारे नियुक्तानित्यर्थः । उद्धारकर्मणि उत्पाटनक्रियायां, विनाशव्यापारे इत्यर्थः । मत्प्रयोगात् मम आदेशात् । नियोक्तुं प्रवर्त्तयितुम् । अभ्युपागमत् स्वीचकार ।

प्रवृत्तं (ग) रहस्यम्।' इत्याकर्ण्य तमहम् 'इयत्तवायुः, उपपद्यस्व स्वकर्मोचितां गतिम्' इति छुरिकया द्विधाकृत्य कृतमात्रं तस्मिन्नेव सप्तार्चिषि (घ) अजुहवम्, अभूच्चासौ भस्मसात्। अथ स्त्रीस्वभावविक्लवां प्राणवल्लभां समाश्वास्य हस्तकिसलये गृहीत्वा गत्वा च तद्गृहम् आहूय च तदनुमत्या सर्वाण्यन्तःपुराणि सद्य एव सेवां (ङ) दत्तवान्। ततो विस्मितान् तान् सर्वान् विसृज्य शय्यागृहे तया कान्तया सह प्रविश्य तामभिरमयन् क्षणमिव तां निशामनैषम्, अध्यगमम् (च) तन्मुखात् राजकुलस्य शीलम्।

अथ उषसि स्नात्वा कृतमङ्गलो मन्त्रिभिः समागतस्तान् अवादिषम्, 'आर्याः! रूपेणैव परिवृत्तो मम स्वभावः, य एष विधानेन हन्तुमिष्टः पिता (छ) मे, स मुक्त्वा स्वमेव राज्यं भूयोऽपि ग्राहयितव्यः। पितृवदमुष्मिन् शुश्रूषयैव वर्त्तामहे, न हि अस्ति पितृवधात् पातकम्' इति। भ्रातरं विशालवर्माणमाहूय उक्तं, 'वत्स! न सुभिक्षाः साम्प्रतं पुण्ड्राः, ते उपद्रुता राष्ट्रं नः सुभिक्षमभिद्रवेयुः, (ज) अतो न अद्य यात्रा कार्य्या' इति। नगरवृद्धाववादिषम्, 'अल्पीयसा मूल्येन महार्हं वस्तु न क्रेतव्यम्, अनुरूपेणैव (झ) मूल्येन क्रीयताम्' इति। शतहलि-

(ग) चिरं प्रवृत्तं सम्प्रति उपस्थितम्।

(घ) इयत् एतावत् पर्य्यन्तम्। आयुः जीवितकालः। उपपद्यस्व लभस्व। कृतमात्रं छेदनक्षण एव। सप्तार्चिषि अग्नौ, ("अग्निर्वैश्वानरो वह्निः···सप्तार्चिर्दमुना शुक्रश्चित्रभानुर्विभावसुः" इत्यमरः)।

(ङ) हस्तकिसलये पाणिपल्लवे। अन्तःपुराणि अन्तःपुरवासिनो जनान्। सेवां परिचर्य्याम्।

(च) अभिरमयन् सुरतक्रीड़या सन्तोषयन्। अध्यगमम् अज्ञासिषम्।

(छ) समागतः मिलितः। परिवृत्तः परिवर्त्तितः, अन्यथाभूत इत्यर्थः। पिता पितृतुल्यः पितृव्यः इत्यर्थः।

(ज) न सुभिक्षाः न सुप्राप्यभिक्षाः, दुर्भिक्षपीड़िता इत्यर्थः। उपद्रुताः आक्रान्ताः। नः अस्माकम्। अभिद्रवेयुः आक्रामेयुः, सुभिक्षे अस्माकं राज्ये उपद्रवं कुर्य्युरित्यर्थः।

(झ) नगरवृद्धौ वृद्धौ नगरवासिनौ प्राचालिक सार्थवाहौ। महार्हं महामूल्यम्। अनुरूपेण उचितेन।

प्रोक्तवान्, 'योऽसौ अनन्तसीरः प्रहारवर्मणः पक्ष इति निनाशयिषितः, सोऽपि पितरि मे प्रकृतिस्थे किमिति नाश्येत? तत् त्वयाऽपि न अत्र संरम्भः (ञ) कार्य्यः' इति ।

ते च सर्वे सर्वमेतदाभिज्ञानिकमुपलभ्य 'स एवायम्' इति निश्चिन्वाना विस्मयमाना मां महादेवीञ्च प्रशंसन्तो मन्त्रबलानि च उद्घोषयन्तः बन्धनात् पितरौ मोचयित्वा स्वं राज्यं प्रत्यपादयन् । (ट) अहञ्च सर्वमिदं तया मे भार्यया आचेष्टितं पितरौ अवगमय्य प्रहर्षकाष्ठाधिगतयोस्तयोः पादमूलमभजे, अभज्ये च यौवराज्यलक्ष्म्या तदनुज्ञातया । (ठ) इत्थं सिद्धकामो देवपादविरहदुःखदुर्भगान् भोगान् उपभुञ्जानः भूयोऽस्य पितृसखस्य सिंहवर्मणः लेख्यात् चण्डवर्मणः चम्पाऽभियोगमवगम्य 'शत्रुवधो मित्ररक्षा च उभयमपि करणीयम्' इति अलघुना सैन्यचक्रेण अभ्यसरम्, अभवञ्च भूमिः (ड) त्वत्पादपद्मसाक्षात्कारानन्दराशेः" इति ।

श्रुत्वैतद्देवो राजवाहनः सस्मितमवादीत्, "पश्यत, पारदारिकमुपधि-

---

(ञ) निनाशयिषितः नाशयितुमिष्टः । प्रकृतिस्थे स्वाभाविकीमवस्थामधिगते, निजराज्याधिरूढे इति भावः । संरम्भः कोपः ।

(ट) आभिज्ञानिकं विकटवर्मवाक्यमिति प्रत्यायकं, वाक्यसमूहमिति शेषः । महादेवीं कल्पसुन्दरीम् । बन्धनात् कारागृहात् । प्रत्यपादयन् प्रापयन्, पितरौ स्वराज्ये प्रतिष्ठितौ अकुर्वन् इत्यर्थः ।

(ठ) प्रहर्षेति ।—प्रहर्षस्य प्रभूतानन्दस्य, काष्ठा उत्कर्षः, तामधिगतयोः प्राप्तयोः, ("काष्ठोत्कर्षे स्थितौ दिशि" इत्यमरः) । अभजे असेवे । अभज्ये असेव्ये, आश्रिये इत्यर्थः । तदनुज्ञातया पितृभ्यामनुमतया ।

(ड) देवेति ।—देवस्य युवराजस्य भवतः, पादयोः चरणयोः, विरहेण वियोगेन, चरणसेवाभावेनेत्यर्थः, यत् दुःखं क्लेशः, तेन दुर्भगान् अप्रियान् । लेख्यात् पत्रिकातः । चम्पाऽभियोगं चम्पानगराक्रमणम् । शत्रुवधः चण्डवर्मणो मालवेशामात्यत्वात् मालवेशेन च राजहंसस्य राज्यहरणात् चण्डवर्मणः शत्रुत्वं बोद्धव्यम् । अलघुना महता, प्रभूतेनेत्यर्थः । सैन्यचक्रेण सैन्यसमूहेन । अभ्यसरम् अभ्यगच्छम् । भूमिः भाजनं, पात्रमित्यर्थः ।

युक्तमपि गुरुजनबन्धमोचहेतुतया दुष्टामित्रबधसाधनतया राज्यलाभमूलतया च पुष्कलौ (ढ) अर्थधर्मावसाधयत्। किं हि बुद्धिमद्भिः प्रयुक्तं न अभ्युपेति शोभाम्?" इति अर्थपालमुखे दृष्टिं निधाय "ब्रवीतु भवान् आत्मीयं चरितम्" इत्यादिदेश।

इति तृतीयोच्छ्वासः।

---

# अथ चतुर्थोच्छ्वासः।

---

## अर्थपालचरितम्।

सोऽब्रवीत्, "देव! अहमपि भवदन्वेषणैककर्मा पर्य्यटन् कदाचित् काशीपुरीमेत्य मणिकर्णिकायामुपस्पृश्य भगवन्तमन्धकमथनमभिप्रणम्य प्रदक्षिणं कुर्वन् कमपि पुरुषमायामवन्तमाबध्यमानपरिकरं रुदितोच्छून-ताम्रदृष्टिम् (क) अपश्यम्, अतर्कयञ्च, 'कर्कशोऽयं पुरुषः कार्पण्यमिव वर्षति म्लानतारेण (ख) चक्षुषा, आरम्भश्च साहसमनुवदति; नूनमसौ प्राणनिस्पृहः किमपि घोरव्यसनमूलं कर्म्म प्रपित्सते' (ग) इति। अपृच्छमेनं, 'भद्र!

---

(ढ) पारदारिकं परस्त्रीगमनम। उपधियुक्तं कपटयुक्तं, कपटत्वात अधर्म्यमित्यर्थः। पुष्कलौ अतिशोभनौ, अत्युत्कृष्टौ इत्यर्थः, ("श्रेयान् ज्येष्ठः पुष्कलः स्यात् सत्तमश्चातिशोभने" इत्यमरः)।

---

(क) मणिकर्णिकायां काशीपुरीस्थतीर्थविशेषे। उपस्पृश्य आचम्य स्नात्वा वा, ("उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपि" इति मेदिनी)। अन्धकमथनम अन्धकासुरनाशनं शिवम। आयामवन्तं दीर्घाकारम। आबध्यमानेति।—आबध्यमानः आरच्यमानः, परिकरः कक्षाबन्धः येन तथाभूतं. ("कक्षाबन्धः परिकरः" इति वैजयन्ती)। रुदितेति।—रुदितेन रोदनेन हेतुना, उच्छूने स्फीते, ताम्रे ताम्रवर्णे, आरक्ते इत्यर्थः, दृष्टी नेत्रद्वयं यस्य तथाभूतम।

(ख) कर्कशः कठिनः, कठोरदर्शन इत्यर्थः। कार्पण्यं दैन्यं, विषादमित्यर्थः। म्लानतारेण निष्प्रभतारकेण।

(ग) आरम्भः अध्यवसायः, परिकरबन्धनादिरूप इत्यर्थः। साहसम् अविमृष्यकारिताम्। अनुवदति कथयति, प्रकाशयतीत्यर्थः। प्राणनिस्पृहः जीवननिरपेक्षः;

सन्नाहः (घ) अयं साहसमवगमयति, न चेत् गोप्यं श्रोतुमिच्छामि।'स मां सबहुमानं (ङ) निर्वर्ण्य 'को दोषः? श्रूयताम्' इति कचित् करवीरतले मया सह कथामकार्षीत्।—

'सौम्य! अहमस्मि पूर्वं कामचारी (च) पूर्णभद्रो नाम। पित्रा प्रयत्नसंवर्द्धितोऽपि दैवगत्या चौर्य्यवृत्तिः आसम्। अथ अस्यां काशीपुर्य्यां वैश्यश्रेष्ठस्य कस्यचित् गेहे चोरयित्वा अपहृतवस्तुना अभिग्राहितो (छ) बद्धः। बद्धे च मयि मृत्युविजयो नाम हिंसाविहारी मत्तगजः पश्यतः कामपालनाम्नः प्रधानामात्यस्य शासनात् मां प्रति महावेगेन समापतत्। मया च निर्भयेण निर्भर्त्सितः भीतवन्न्यवर्त्तत। (ज) तदवलोक्य मन्त्री मामाहूयावादीत्, 'भद्र! मृत्युरिवायं हिंसाविहारी गजेन्द्रः त्वयैवं निराकृतः! तत् प्रीतोऽस्मि ते, विरमास्मादपकर्मणः, अद्य प्रभृति आर्य्यवृत्त्या मामनुवर्त्तस्व' (झ) इति। 'यथा आज्ञापयसि' इति मयोक्तः मित्रमिव मामनुगृह्य जातविश्रम्भेण (ञ) मयैकदा पृष्टः स्वचरितमाचष्ट।

---

प्राणेषु ममतां परित्यजन् इत्यर्थः। किमपि अनिर्देश्यम। घोरव्यसनमूलं दारुणविपत्तिहेतुकम्। कष्टं कष्टम्, आत्महननादिरूपं दुःखजनकं कर्मेत्यर्थः। प्रपित्सते प्रपत्तुमिच्छति, वरीतुमिच्छतीत्यर्थः।

(घ) सन्नाहः परिकरबन्धनं समुद्योगो वा।

(ङ) सबहुमानं समादरपूर्वकं, सश्रद्धमित्यर्थः।

(च) पूर्वं प्राक्। कामचारी यथेच्छाचारी, उच्छृङ्खलस्वभाव इत्यर्थः।

(छ) अपहृतवस्तुना चोरितधनेन। अभिग्राहितः धारितः, राजपुरुषैरिति शेषः।

(ज) शासनात् आदेशात। न्यवर्त्तत निवृत्तोऽभवत्।

(झ) एवं भर्त्सनमात्रेण, न तु ताड़नादिनेति भावः। निराकृतः विमुखीकृतः। अपकर्मणः चौर्य्यवृत्तिरूपनिन्दितकार्य्यात्। आर्य्यवृत्त्या सदाचरणेन। अनुवर्त्तस्व अनुसर, मत्समीपे अवस्थानं कुरु इत्यर्थः।

(ञ) मयोक्तः इत्यत्र प्रधानामात्यकामपाल इति शेषः। अनुगृह्य अनुग्रहं कृत्वा। जातविश्रम्भेण उत्पन्नविश्वासेन, मन्त्रिणो विश्वासपात्रेण इत्यर्थः।

'आसीत् कुसुमपुराधिपतेः (ट) मन्त्री धर्मपालो नाम, तस्य पुत्रः सुमित्रो नाम पितेव समः प्रज्ञागुणेषु। तस्यास्मि वैमात्रेयः कनीयान् भ्राताऽहम्। शैशवे दुर्वृत्तोऽहं तेनोपदिष्टोऽपि यदृच्छया दिक्षु भ्रमन् अस्यां वाराणस्यां समेत्य अस्याः पतेश्चण्डसिंहस्य अन्यां कान्तिमतीं चकमे, कथञ्चन सङ्गमे (ठ) च। गूढं विहरता मया सा सञ्जातगर्भा पुत्रमेकमसूत, अत्याचीच 'मृतजातः' इति परिजनः अस्याः तं बालं क्रीडाशैले, शबरी (ड) च काचित् श्मशानं निनाय। रक्षिपुरुषभीतया तया अगत्या रहस्य-निर्भेदे कृते राजाज्ञया अहं श्मशानमुपनीय मातङ्गीयतेन खड्गेन प्राजिहीर्ष्ये। (ढ) दैवबलात् लूनबन्धनोऽहं तमसिम् आच्छिद्य तं मातङ्गम् अन्यांश्च कांश्चित् प्रहृत्य पलायमानो निराश्रयश्च भ्रमन् कयाऽपि दिव्ययोषिता उपास्थायिषि। (ण) सा 'का त्वम्? कथं मामनुगृह्णासि?' इति सादरमभिहिता मया कृताञ्जलिः अब्रवीत्, 'आर्य्य! अहमस्मि तारावली नाम यक्षकन्या। अहमेकदा वाराणस्याः प्रेतावासे कमपि रुदन्तं बालकं दृष्ट्वा आदाय स्नेहेन पित्रोः सकाशमनैषम्, अनैषीच्च तातो देवस्य अलकेश्वरस्य आस्थानीम्। (त) तेन देवेनाहमाहूय अभिहिता,

(ट) कुसुमपुराधिपतेः पुष्पपुराधिपस्य राजहंसस्य।

(ठ) तेन ज्येष्ठेन सुमित्रेण। कथञ्चन केनापि प्रकारेण। सङ्गमे सङ्गतो बभूव, (सम्पूर्वकगमधातोः आत्मनेपदिनः लिटः उत्तमपुरुषैकवचनस्य रूपमिदम्। "समो गम्यृच्छिभ्याम्" इत्यात्मनेपदम्)।

(ड) गूढं गुप्तं यथा तथा। अस्याः कान्तिमत्याः। क्रीडाशैले विहारार्थं निर्मितकृत्रिमपर्वते। शबरी व्याधपत्नी।

(ढ) तया शबर्या। अगत्या उपायान्तराभावेन। रहस्यनिर्भेदे गोपनीय-विषयं प्रकाशिते। मातङ्गीयतेन मातङ्गेन चण्डालेन, उद्यतः हननार्थमुत्तोलितः तेन, ("चण्डालप्लवमातङ्ग-दिवाकीर्तिजनङ्गमाः" इत्यमरः)। प्राजिहीर्ष्ये प्रहर्त्तु-मिष्टः, घातकेनेति शेषः।

(ण) लूनबन्धनः छिन्नबन्धनः। आच्छिद्य आकृष्य, चण्डालहस्तादिति शेषः। उपास्थायिषि असेविषि, समगमिषि इति वा, मिलितोऽभूवमित्यर्थः।

(त) प्रेतावासे श्मशाने। अलकेश्वरस्य अलकाधिपस्य कुबेरस्य। आस्थानीं सभाम्।

'वत्से ! बालेऽस्मिन् कीदृशस्ते भावः ?' इति । 'औरस इवास्मिन् वत्सलता' इति मयोक्ते सः 'सत्यमाह वराकी' (थ) इति तन्मूलां महतीं कथामकरोत् । तत्र एतत् मया अवगतं; त्वं मम जन्मान्तरीणः पतिः, तस्मिंश्च जन्मान्तरे शिशुरयं मङ्गभंजः, मम च विनयवती नाम या सपत्नी आसीत् तया असौ बालः स्नेहेनावर्द्धत । ततश्च तस्यां कान्तिमत्यवस्थायामद्य स (द) बालः समुदभूत् । एवं मृत्युमुखपरिभ्रष्टं दैवात् मयोपलब्धं तं तस्यैव देवस्यादेशात् वने तपस्यतो राजहंसस्य देव्यै वसुमत्यै तत्सुतस्य भाविचक्रवर्त्तिनो राजवाहनस्य परिचर्य्यार्थं समर्प्य गुरुभिरनुज्ञाता साम्प्रतं कृतान्तबलात् कृतान्तमुखपरिभ्रष्टस्य (ध) भवतः पादपद्मशुश्रूषार्थमागताऽस्मि' इति ।

श्रुत्वा तां जननान्तरप्रियामसकृदाश्लिष्य सहर्षं तत्प्रभावरचिते महति मन्दिरे अहर्निशं भूमिदुर्लभान् (न) भोगान् भुञ्जानः कदाचित् तामवादिषं, 'प्रिये ! प्रत्यपकारेण मत्प्राणद्रोहिणश्चण्डसिंहस्य वैरनिर्यातनसुखमनुबुभूषामि' (प) इति । तया सस्मितयोक्तम्, 'एहि कान्त ! कान्ति-

(थ) औरसः उरसः सम्भूतः, आत्मज इति भावः । वत्सलता वात्सल्यं, स्नेह इत्यर्थः । वराकी दीना, अनुकम्पार्हा इति यावत् ।

(द) ततः तदनन्तरं, पुनर्जन्मनि इत्यर्थः । तस्यां विनयवत्याम् । कान्तिमत्यवस्थायां कान्तिमतीरूपेण समुत्पन्नायामित्यर्थः । सः पूर्वजन्मनि यः मङ्गभंजः विनयवत्या च वर्द्धितः स इत्यर्थः ।

(ध) तस्यैव देवस्य कुबेरस्य । गुरुभिः पित्रादिभिः । कृतान्तबलात् दैवप्रभावात् । कृतान्तमुखपरिभ्रष्टस्य यमग्रासात् कथञ्चित् परित्रातस्य, ("कृतान्तो यमसिद्धान्त-दैवाकुशलकर्मसु" इति मेदिनी ) ।

(न) तदिति ।—तस्याः तारावल्याः, प्रभावेण अमानुषशक्त्या, रचिते निर्मिते । भूमिदुर्लभान् मानुषलोकदुष्प्रापान्, स्वर्गीयानित्यर्थः ।

(प) प्रत्यपकारेण अपकारस्य प्रतिदानेन, प्रतिशोधग्रहणेनेत्यर्थः । मत्प्राणद्रोहिणः मम जीवनेषु हिंसामाचरतः, मम प्राणनाशोद्यतस्येत्यर्थः । अनुबुभूषामि अनुभवितुमिच्छामि ।

मतीदर्शनाय' इति निशीथे (फ) अहं राज्ञो वासगृहमनीयै। (ब) अहन्तु तच्छिरोभागवर्त्तिनीमसियष्टिमादाय तं नृपं प्रबोध्याब्रवम्, 'अहमस्मि तव जामाता, त्वदनुमतिमन्तरेण त्वत्कन्याऽभिमर्षी, तमपराधमनुवृत्त्या प्रमार्ष्टुम् (भ) आगतः' इति।

सोऽतिभीतो बद्धाञ्जलिरवदत्, 'अहमेव मूढोऽपराधी यस्तव दुहितृ-संसर्गानुग्राहिणो ग्रहग्रस्त इवोत्क्रान्तसीमा (म) बधमादिशम्। आस्तां तावत् कान्तिमती, राज्यमिदं जीवितञ्च मम अद्य प्रभृति त्वदा-यत्तम्' इति। परेद्युश्च प्रकृतिमण्डलम् (य) आहूय यथाविधि कन्यां मह्य-मदात्। तारावली च कान्तिमत्यै तनयवार्त्तामश्रावयत्। इत्थमहं मन्त्रिपदापदेशं यौवराज्यम् (र) अनुभवन् सुखं विहरामि।'

एवं गते स महाभागः कालेन अलसकेन स्वर्गते श्वशुरे, ज्यायसि च श्याले चण्डघोषनाम्नि स्त्रीषु अतिप्रसङ्गात् क्षयरोगेण प्रागेव क्षयं गते पञ्चवर्षदेशीयं सिंहघोषाख्यं कुमारमभ्यषेचयत्, (ल) अवर्द्धयच्च यथा-विधि तं स साधुः। अथ असौ यौवनोन्मत्तः कतिपयैर्दुर्मन्त्रिभिरित्थमग्राह्यत

---

(फ) निशीथे अर्द्धरात्रे, ("अर्द्धरात्रनिशीथौ द्वौ" इत्यमरः)।

(ब) अनीये नीतः, तारावल्या इति शेषः।

(भ) प्रबोध्य जागरयित्वा। त्वत्कन्याभिमर्षी तव तनयाधर्षणकारी। अनु-वृत्त्या सेवया। प्रमार्ष्टुं क्षालयितुम्।

(म) दुहितेति।—दुहिता तनयया सह, संसर्गात् संयोगात्, मिथुनीभावा-दित्यर्थः, संसर्गं कृत्वेति यावत्, अनुगृह्णाति अनुकम्पते इति तादृशस्य। ग्रहग्रस्तः भूतोपहत इव। उत्क्रान्तसीमा लङ्घितमर्य्यादः।

(य) परेद्युः परस्मिन् दिने। प्रकृतिमण्डलम् अमात्यादिसमूहम्।

(र) मन्त्रिपदापदेशम् अमात्यपदवीव्याजं, मन्त्रित्वच्छलेनेत्यर्थः। यौवराज्यं युवराजभावं, बाह्यतोऽहं मन्त्री, यथार्थतस्तु युवराज एवाऽस्मीति भावः

(ल) अलसकेन क्षयरोगेण, ("क्षयस्त्वलसको मतः" इति वैजयन्ती) तदाख्य-जीर्णरोगविशेषेण वा। ज्यायसि ज्येष्ठे। अतिप्रसङ्गात् अतिरिक्तसंसर्गात्। पञ्च-वर्षदेशीयं प्रायेण पञ्चवर्षीयं, किञ्चिन्न्यूनपञ्चवर्षवयस्कमित्यर्थः। अभ्यषेचयत् अभि-षिक्तमकारयत्।

‘तव अनेन स्वसा प्रसह्य बलात्कृता लम्पटेन ; (व) ततश्च प्रसुप्ते
न प्रहर्तुमुद्यतासिः आसीत् । तच्च देवज्येष्ठं विषेण हत्वा बालो-
मर्थं इति त्वमद्यापि प्रकृतिविश्रम्भणायोपेक्षितः । (श) तत् शीघ्र-
मन्तकपुरं (ष) नेतुमर्हति देवः’ इति । स एवं दूषितोऽपि यक्षिणी-
ात् नामुष्मिन् पापम् (स) आचरितुमशकत् ।

थ केनापि कारणेन यक्षिण्या विरहितमुपलभ्य निर्भयोऽसौ यथा-
राजकार्य्याणि कुर्वन्तं तं पूर्वसङ्केतितैः पुरुषैरभिग्राह्य अबन्धयत्,
श्च तस्य मरणफलं (ह) नेत्रोत्पाटनमिति । अतोऽहमेकान्ते यथेष्ट-
मुक्ता तस्य साधोः पुरः प्राणान् मुमुक्षुः (क) बध्नामि परिकरम्’ इति ।
नया अपि तत् पितृव्यसनमाकर्ण्य साश्रु अभिहितं, ‘सौम्य ! किं
नेन ? यच्चकन्यया वसुमतीहस्ते यः समर्पितः पोतः सोऽहमस्मि,
किं प्रतिपत्तव्यम् ?’ (ख) इति वदति एव मयि सहसा आशीविषः
श्यत, तमहं मन्त्रबलेन सङ्गृह्य पूर्णभद्रमवादिषं, ‘भद्र ! सिद्धं नः
हितम्, अनेन पितरं नेत्रोत्पाटनार्थमानीतं यदृच्छया पातितेन

---

व) अमौ कुमारसिंहघोषः । इत्थम एवं प्रकारम् । अपाह्यत अबोध्यत । कामपालेन मन्त्रिणा । स्वसा भगिनी कान्तिमती । प्रसह्य बलपूर्वकम् । न परस्त्रीलोलुपेन दुश्चरित्रेण ।

श) तं नामावशेषमित्यर्थः । देवज्येष्ठं देवस्य भवतः अग्रजम् । अयं भवान् ोषः । प्रकृतीति ।—प्रकृतीनाम अमात्यादीनां प्रजावर्गाणां वा, विश्रम्भणाय सोत्पादनाय । उपेक्षितः अनाहृतः, शिशुरयमित्यवज्ञयैव न विनाशित इति : ।

(ष) अमुं कामपालम । अन्तकपुरं यमभवनम् ।

(स) दूषितः दुष्टमन्त्रिभिः भेदं गमितः । यक्षिणीति ।—यक्षिण्याः तारा- ः, प्रभावात् अलौकिकशक्तेः । पापम अनिष्टम् ।

(ह) विरहितं परित्यक्तम । असौ सिंहघोषः । तं कामपालम् । पूर्वसङ्केतितैः र दत्तसङ्केतैः, कामपालबन्धनार्थं प्रागेव प्राप्तगोपनराजादेशैरित्यर्थः । मरण- मरणं मृत्युरेव, फलं परिणामो यस्य तादृशं, नेत्रोत्पाटनमित्यस्य विशेषणम् ।

(क) मुमुक्षुः मोक्तुमिच्छुः । (ख) पोतः शिशुः, ("पोतः पाकोऽर्भको डिम्भः क; शावकः शिशुः" इत्यमरः) । प्रतिपत्तव्यं प्रतिविधातव्यम् ।

दंशयित्वा तथा विषं स्तम्भयेयं यथा मृत इत्युदास्येत।' (ग) ततश्च पूर्णभद्रमुखेन मातरं प्रबोध्य तया यत् यत् करणीयं तत्तदुपदिश्य च घोषणास्थाने तिन्तिड़ीवृक्षमारुह्य गूढ़तनुः (घ) अतिष्ठन्। तावन्मे पितरं तस्करमिव पश्चाद्बद्धभुजमनेकजनानुयातमानीय मदभ्यासे एव स्थापयित्वा मातङ्गः त्रिवारम् अघोषयत्, 'एष मन्त्री कामपालः भर्त्तारं चण्डसिंहं युवराजं चण्डघोषञ्च निहत्य पुनर्देवेऽपि सिंहघोषे पापमाचरिष्यन् विश्वासात् रहस्यभूमौ अमात्यं शिवनागादिकमाहूय राजवधायोपजप्य स्वामिभक्त्या तद्विवृतगुह्यः 'राज्यकामुकस्य अस्य ब्राह्मणस्य अन्धतमःप्रवेशो न्याय्यः' इति विचारपतिवाक्यादद्युद्धरणार्थं (ङ) नीयते' इति।

श्रुत्वैतत् बहुकलकले जनसमूहे पितुरङ्के (च) तमाशीविषं न्यक्षिपम्, अस्तम्भयञ्च क्षणेन विषम्, अपतच्च स भूमौ मृतकल्पः। स च दर्वीकरस्तमपि चण्डालं दष्ट्वा त्रासद्रुतलोकदत्तमार्गः प्राद्रवत्। (छ) अथ मे माता प्राक् पूर्णभद्रप्रबोधिता तादृशेऽपि व्यसने नातिविक्लवा पद्मामिव आगत्य मत्पितुरुत्तमाङ्गमुत्सङ्गेन दधती राजानं समदिशत्, 'एष मम

(ग) आशीविषः सर्पः। नः अस्माकम। समीहितं चेष्टितं, मनोरथमित्यर्थः। अनेन आशीविषेण। यदृच्छया स्वेच्छया, इच्छापूर्वकमित्यर्थः, सहसा इत्यर्थो वा। स्तम्भयेयं बध्नीयां, स्तब्धं कुर्यामित्यर्थः। उदास्येत उपेक्ष्येत, परित्यज्येत इत्यर्थः।

(घ) मातरं कान्तिमतीम। तया मात्रा। घोषणास्थाने उच्चैःस्वरेण दोषाणां प्रख्यापनस्थले। गूढ़तनुः गुप्तदेहः, आत्मानं गोपयित्वा इत्यर्थः।

(ङ) मदभ्यासे मम समीपे। मातङ्गः चाण्डालः, घातक इत्यर्थः। रहस्यभूमौ निर्जनप्रदेशे, गोपने इत्यर्थः। उपजप्य भेदयित्वा, राजनि विद्वेषम उत्पादयित्वा इत्यर्थः। तदिति।—तेन शिवनागामात्येन, विवृतं प्रकाशितं, गुह्यं गुप्तमन्त्रं यस्य, तादृशः। अन्धतमःप्रवेशः अन्धतमसि गाढ़ान्धकारे, प्रवेशः निक्षेप इत्यर्थः। अद्युद्धरणार्थं नेत्रोत्पाटनार्थम।

(च) बहुकलकले कृतकोलाहले। अङ्के क्रोडे।

(छ) दर्वीकरः सर्पः। त्रासेति।—त्रासात् भयात, द्रुतैः पलायितैः, लोकैः जनैः, दत्तः मार्गः पन्था यस्मै तादृशः। प्राद्रवत् प्राधावत्।

र्त्ता न वेत्ति दैवमेव जानाति, न मेऽनया चिन्तयाऽस्ति
तु गतिमननुप्रपद्यमाना भवत्कुलं कलङ्कयेयम्, (ज) अतोऽनु-
भर्त्रा सह चितामधिरोढुम्' इति। तदाकर्ण्य प्रीतः स
देशत्, 'क्रियतां कुलोचितमनुष्ठानम्, अनुभूयताञ्च मे भगिनी-
त्सवोत्तरः पश्चिमो विधिः' (झ) इति। अथानीतः पिता मे
(ञ) भूमौ स्थापितश्च। अथ मदम्बा सहमरणमण्डनम् (ट) अनु-
पितुरन्तिकं मे प्राविशत्। तत्र च पूर्वमेव पूर्णभद्रोपस्थापितेन
बलेन निर्विषीकृतं पितरमैक्षत। ततश्च हृष्टतमा पितुर्मे
मुखौ पतन्तौ मां मुहुर्मुहुः परिष्वज्य सहर्षमङ्कमारोपयन्तौ
णो किमप्यन्यादृशीवाजनिष्ट। पिताऽपि मे पूर्णभद्रमुखेन
विदितमद्वृत्तान्तः भगवतो मघवतोऽपि (ठ) भाग्यवत्तमात्मानम-
अथाहं पितरमकथयम्, 'आज्ञापयतं किमिदानीं करणी-
ति। पिता अब्रवीत्, 'वत्स! गृहमेतदस्मदीयमतिविशालं,
हनि अक्षय्याणि आयुधानि, अलङ्घ्या च गुप्तिः, उपकृताश्च
बहवः सन्ति सामन्ताः, प्रकृतयश्च वक्ष्यो न मे व्यसनमनु-
(ड) सुभटानाञ्चानेकसहस्रमस्ति, अतोऽत्रैव स्थित्वा कथमपि

---

कुसमाङ्गं मस्तकम्। उत्सङ्गेन क्रोडेन। समादिशत सन्देशं वाचिकं
दृतमुखेन वक्ष्यमाणवार्तां प्रेरितवतीत्यर्थः। अननुप्रपद्यमाना अननु-
ननुगच्छन्तीत्यर्थः। कलङ्कयेयं दूषयेयं, कलङ्कितं कुर्यामित्यर्थः।
उत्सवोत्तरः उत्सवप्रधानः, महाडम्बरबहित इति भावः। पश्चिमो विधिः
धानं, प्रेतकृत्यमिति भावः।
विविक्तायां जनशून्यायाम्। (ट) सहमरणमण्डनं पत्यनुमरणकालोचित-
(ठ) मघवतोऽपि इन्द्रादपि।
अक्षय्याणि अविनश्वराणि, प्रचुरव्ययेनापि न क्षीणीभवितुमर्हाणि इत्यर्थः।
न अलङ्घ्याणि। गुप्तिः रक्षाविधिः, गृहस्य रक्षाविधानमित्यर्थः। सामन्ताः
ः स्वदेशाव्यवहितभूमिः इमे राजानः इति तादृशाः, स्वदेशानन्तरराजानः
प्रकृतयः अमात्याः प्रजासमूहा वा। व्यसनं भ्रंशं, प्राणदण्डरूपविपत्ति-
। अनुमोदन्ते अनुमन्यन्ते।

दुर्दान्तमेनम् उच्छेत्स्यामः' (ढ) इति। अनुमोदितञ्च मया तातस्य तदभिप्रेतम्।

इत्थमवस्थितेषु अस्मासु राजा विज्ञातोदन्तः अस्मदुच्छेदाय बहून् उपायान् प्रायुङ्क्त, ते चास्माभिरहन्यन्त। (ण) एतस्मिन्नवसरे पूर्णभद्रमुखात् राज्ञः शयनस्थानमवगम्य स्वगृहकोणात् सुरङ्गामकार्षम्। गता च सा भूमिस्वर्गकल्पमनल्पकन्यकाजनं कमप्युद्देशम्। (त) तत्र च मां दृष्ट्वा प्रव्यथितेषु नारीजनेषु काचिदिन्दुकलेव स्वलावण्येन रसातलान्धकारं निह्नुवाना राजलक्ष्मीरिवानेककुनृपपरिहाराय महीविवरं प्रविष्टा निष्टप्तकनकपुत्रिकेवावदातकान्तिः कन्यका चन्दनलतेव मलयमारुतेन मद्दर्शनेनोदकम्पत। (थ) काचिच्च तन्मध्यात् स्थविरा पादयोर्मे निपत्य सत्रासमब्रवीत्, 'दीयताम् अभयदानमस्मै अनन्यशरणाय (द) स्त्रीजनाय। किमसि देवकुमारो दनुजयुद्धतृष्णया रसातलं विविक्षुः? (ध) आज्ञापय कोऽसि? किमर्थमागतोऽसि?' इति। मयोक्तं, 'मास्म भवत्यो भैषुः; अहमस्मि कामपालात् विप्रमुख्यात् (न) देव्यां कान्तिमत्यामुत्पन्नोऽर्थपालो

---

(ढ) सुभटानां सुशिक्षितयोद्धृणाम्। कथमपि येन केनापि प्रकारेण। उच्छेत्स्यामः उन्मूलयिष्यामः, विनाशयिष्यामः इत्यर्थः।

(ण) विज्ञातोदन्तः विदितवृत्तान्तः। उपायान् कौशलान्। प्रायुङ्क्त प्रयुक्तवान्। ते उपायाः। अहन्यन्त व्यनश्यन्त, विफलीभूता इत्यर्थः।

(त) सा सुरङ्गा। भूमिस्वर्गकल्पं भूतलस्थस्वर्गतुल्यम्। अनल्पकन्यकाजनं बहुस्त्रीजनाधिष्ठितम्। उद्देशं स्थानम्।

(थ) प्रव्यथितेषु प्रपीडितेषु, अत्यर्थं भीतेषु इत्यर्थः। निह्नुवाना अपनयन्ती, दूरीकुर्वतीत्यर्थः। अनेकेति।—अनेकान् बहून्, कुनृपान् दुष्टराजवर्गान्, परिहाराय परित्यागाय। निष्टप्तकनकपुत्रिकेव उत्तप्तस्वर्णनिर्मितपुत्तलिकेव। अवदातकान्तिः गौरवर्णा इत्यर्थः। उदकम्पत अत्यर्थं कम्पितवती।

(द) अनन्यशरणाय नास्ति अन्यत् अपरं शरणं रक्षिता यस्य तादृशाय, रक्षकहीनाय इत्यर्थः, ("शरणं गृहरक्षित्रोः" इत्यमरः)।

(ध) दनुजयुद्धतृष्णया दानवैः सह समरवाञ्छया। विविक्षुः प्रवेष्टुमिच्छुः।

(न) मास्म भैषुः न भीता अभूवन्, न भीता भवन्तु इत्यर्थः। विप्रमुख्यात् ब्राह्मणश्रेष्ठात्।

नाम। सत्यर्थे (प) निजगृहात् नृपगृहं प्रविशन् युष्माभिर्दृष्टः। कथयत काः स्थ यूयम्? कथं वा अत्र निवसथ?' इति।

सा कृताञ्जलिरभ्यधात्, 'भर्तृदारक! भाग्यवत्यो वयं याश्चाद्य एभिरेव चक्षुर्भिरद्राक्ष्म। (फ) श्रूयतां, तव मातामहेन चण्डसिंहेन चण्डघोषः कान्तिमती चेत्यपत्यद्वयमुदपादि। चण्डघोषस्तु युवराजः स्त्रीष्वतिप्रसङ्गात् प्रागेव क्षयमगात् भार्यायाम् आचारवत्यामन्तर्वत्न्याम्। (ब) असौ (भ) च इमां मणिकर्णिकां नाम कन्यां प्रसूय तत्प्रसववेदनया त्यक्तप्राणा पत्युरन्तिकमगात्। ततश्च देवश्चण्डसिंहो मां रहसि समाज्ञापयत्, 'ऋद्धिमतिके! कन्यामिमां सुलक्षणां वर्द्धयित्वा मालवेन्द्रनन्दनाय दर्पसाराय दित्सामि, (म) बिभेमि च कान्तिमतीवृत्तान्तेन कन्यकानां प्रकाशावस्थापनात्। अतोऽत्रैव महति भूमिगृहे प्रभूतपरिवर्हया भवत्या संवर्द्ध्यतामियम्। (य) अस्त्यत्र भोग्यवस्तु वर्षशतेनाप्यक्षय्यम्' इत्यभिधाय निजवासगृहस्याङ्गनभित्तावर्द्धपादं किष्कुविष्कम्भमुद्धृत्य तेनैव द्वारेण स्थानमिदमस्मानवीविशत्। (र) इह वसन्तीनां नो

---

(प) सत्यर्थे प्रयोजने विद्यमाने, प्रयोजनवशादित्यर्थः।

(फ) अद्राक्ष्म अवालोकयिष्म।

(ब) अन्तर्वत्न्यां गर्भिण्याम्।

(भ) असौ आचारवती।

(म) दित्सामि दातुमिच्छामि।

(य) महति विशाले। भूमिगृहे भूगर्भस्थभवने। प्रभूतपरिवर्हया प्रचुरपरिच्छदया, प्रचुराण्यावश्यकद्रव्याणि गृहीत्वा इत्यर्थः। संवर्द्ध्यतां प्रतिपाल्यतामित्यर्थः। इयं मणिकर्णिका।

(र) अक्षय्यं क्षीणीभवितुमनर्हं, शतवर्षभोगेनापि न क्षयं भविष्यतीत्यर्थः। निजवासगृहस्य आत्मनः शयनागारस्य। अङ्गनभित्तौ चत्वरप्रदेशे, ("भित्तिः कुड्यप्रदेशयोः" इति मेदिनी)। अर्द्धपादम् अर्द्धेन सहितं पादं चतुर्थांशं, हस्तप्रमाणद्वारस्य भागत्रयमित्यर्थः। किष्कुविष्कम्भं हस्तप्रमाणं प्रतिबन्धं, हस्तमितं द्वारमित्यर्थः, ("किष्कुर्हस्ते वितस्तौ च" इत्यमरः। "विष्कम्भो योगभेदे स्यात् विस्तारप्रतिबन्धयोः" इति मेदिनी)। यद्वा—सप्तकोष्ठकपरिमितं विष्कम्भम् आवरणस्तम्भम्। उद्धृत्य उन्माद्य। अवीविशत् प्रवेशयामास।

द्वादश समाः समत्ययुः। (ल) इयञ्च वत्सा तरुणीभूता, न चाद्यापि स्मरति राजा। काममियं पितामहेन दर्पसाराय दित्सिता, परं त्वदन्वया कान्तिमत्या चेयं गर्भस्थैव द्यूतजिता स्वमाता तवैव जायात्वेन सङ्कल्पिता, तदेव प्राप्तरूपं (व) चिन्त्यतां कुमारेण' इति। अहन्तु 'अद्यैव राजगृहे किमपि कार्य्यं साधयित्वा प्रतिनिवृत्तो यथाऽहं प्रतिपद्ये' इति तामुक्त्वा तेनैव द्रौपदर्शितबिलपथेन अर्द्धरात्र एव वासगृहं प्रविश्य निभृतायां निःशब्दोऽहं [illegible] (श) [illegible]

दायत्तमेव जातम्। प्रकृतिकोपभयात्तु मन्त्रिणा मुमुचिषितोऽपि (क) न मुक्त एव सिंहघोषः। तथा स्थिता वयं सहसा सिंहवर्मणः देवपादभक्तस्य अभिनवाभियोगमाकर्ण्य अभिसरन्तः (ख) देवचरणदर्शनसुखमलभामहि।” इति अभिधाय कृताञ्जलिं तिष्ठन्तं तं देवो राजवाहनः सस्मितं प्राह स्म, “बहु पराक्रान्तं, बुद्धिश्च समुपयोगिनी, साम्प्रतं मुक्तबन्धस्ते श्वशुरः (ग) पश्यतु माम्” इत्यभिधाय प्रीतिपूर्णः “त्वमपि स्वचरितमाख्याहि” इति प्रमतिमन्वयुङ्क्त।

इति चतुर्थोच्छ्वासः।

---

## अथ पञ्चमोच्छ्वासः।

## प्रमतिचरितम्।

सोऽब्रवीत्—“देव! भवदन्वेषणाय भ्रमन्नहं विन्ध्याद्रिपार्श्वरूढस्य कस्यचित्तरोरधः सन्ध्यायां समुपास्य सन्ध्यां भूतले किसलयशय्यामधिशयानः कृताञ्जलिः ‘या अस्मिन् वनस्पतौ वसति देवता, सैव मेऽद्य शरणमस्तु’ इति उपधाय (क) वामभुजं निद्रामगच्छम्। क्षणेन च

---

(क) प्रकृतीति।—प्रकृतीनाम् अमात्यादीनां प्रजानाञ्च, कोपात् क्रोधात्, यत् भयं त्रासः तस्मात्। मुमुचिषितः मोक्तुमिष्टः।

(ख) अभिनवाभियोग शत्रुकृताक्रमणम्। अभिसरन्तः अभिमुखमागच्छन्तः, अङ्गराजसाहाय्यार्थं समागच्छन्त इत्यर्थः।

(ग) समुपयोगिनी कालोचितेत्यर्थः, प्रतिभाशालिनीति यावत्। श्वशुरः श्वशुरस्य सोदरत्वात् सिंहघोषस्यापि श्वशुरत्वम्।

---

(क) किसलयशय्यां पल्लवरचितशयनीयम्। शरणं रक्षित्री, रक्षाकर्त्री इत्यर्थः। उपधाय उपाधानं कृत्वा, शिरोनिधानीकृत्येत्यर्थः।

अवनितुर्लभेन स्पर्शेन किमपि सुखायितगात्रः परिस्फुरितदक्षिणभुजः (ख) 'किमेतत्!' इति मन्दं मन्दम् उन्मिषन् वामतः सौधोपरि चित्रास्तरणोपितशय्यायां (ग) प्रसुप्तमङ्गनाजनं दक्षिणतश्च परमसुन्दरीं कामपि तरुणीं निद्रितामालोकयम्, अतर्कयञ्च, 'क्व गता सा महाटवी! कुत एतत् अभ्रङ्कषं सौधमागतं! कश्चासौ सुराङ्गनाजन इव स्वैरसुप्तः सुन्दरीजनः! का चेयं देवीवारविन्दवासिनी (घ) शयनतलमधिशेते! अस्ति चानतिक्रान्तशिष्टमर्य्यादचेतसो ममास्यामासक्तिः; (ङ) तदलं यद्भवतु तद्भवतु, भाग्यं परीक्षिष्ये' इति तां स्पृष्टास्पृष्टमेव किमपि सञ्जातरागसाध्वसं लक्षसुप्तः (च) स्थितोऽस्मि। साऽपि मत्स्पर्शेन किमपि सुखायमानेन मन्दमन्दमुन्मिषन्ती त्रासविस्मयहर्षरागशङ्काविलासविभ्रमव्यवहितानि व्रीडाऽन्तराणि कानि कानि कामेनावस्थान्तराणि (छ) कार्य्यमाणा कथमपि

(ख) किमपि अनिर्वचनीयं यथा तथा। सुखायितगात्रः सुखायितम् अनुभूतसुखं, गात्रं देहः यस्य तथाविधः। परिस्फुरितदक्षिणभुजः स्पन्दितवामेतरबाहुः, "वामेतरभुजस्पन्दो वरस्त्रीलाभसूचकः" इति शास्त्रात् दक्षिणभुजस्फुरणस्य उत्तमाङ्गनालाभसूचकत्वं बोद्धव्यम्।

(ग) उन्मिषन् उन्मीलयन्, चक्षुरिति शेषः। चित्रेति।—चित्रं नानावर्णं, विचित्रकारुकार्य्यसमन्वितमित्यर्थः, यत् आस्तरणं शय्याच्छादनवस्त्रं, तेन उपेता युक्ता, या शय्या शयनीयं तस्याम्।

(घ) अभ्रङ्कषं गगनस्पर्शि। सौधं राजभवनम्। आगतम् उपस्थितम्। स्वैरसुप्तः स्वच्छन्दनिद्रितः। अरविन्दवासिनी कमलासना, लक्ष्मीत्यर्थः।

(ङ) अनतीति।—अनतिक्रान्ता न उल्लङ्घिता, शिष्टानां साधूनां, मर्य्यादा सीमा येन तादृशं, चेतः चित्तं यस्य तादृशस्य। आसक्तिः अनुरागः।

(च) स्पृष्टास्पृष्टमेव किञ्चित् स्पृष्टं किञ्चिद्वा अस्पृष्टं यस्मिन् कर्मणि तद्यथा तथा, शिथिलभावेन किञ्चित् स्पर्शं कृत्वा परक्षणे एव किञ्चिदपसृतं यथा तथेत्यर्थः। सञ्जातेति।—सञ्जातः समुत्पन्नः, रागः आसक्तिः, साध्वसं भयञ्च यस्मिन् तत् यथा तथा। लक्षसुप्तः व्याजनिद्रितः, कपटनिद्रितः इत्यर्थः। ("लक्षं व्याजशरव्ययोः" इति हेमः)।

(छ) किमपि अनिर्वचनीयं यथा तथा। सुखायमानेन सुखप्रदेनेत्यर्थः। त्रासेति।—त्रासः कोऽयं कथं केन वा प्रकारेण अत्रागतः इति भयं, विस्मयः आवद्धकपाट-

भावविशेषान् निगृह्य सस्पृहेण मधुरसङ्कुचितविभागेण मन्दमन्दप्रसारितेन चक्षुषा मां निर्वर्ण्य तस्मिन्नेव शयनतले सचकितम् (ज) अशयिष्ट। अहञ्च कथमपि निद्रामभजे। सहसा प्रबुद्धश्चालक्षयं, (झ) सैव महाटवी, तदेव तरुतलं, तदेव पर्णशयनम्। विभावरी च अत्यगात्। (ञ) 'किमिदम्!' इति विस्मितः 'तत्त्वत एतदविदित्वा न त्यक्ष्यामि भूमिशयनं, यावदायुरस्यै देवतायै प्रतिशयिष्यामि' (ट) इति कृतमतिरतिष्ठम्।

अथ आविर्भूय काऽपि वराङ्गना विरहिणीव लक्ष्यमाणा प्रणिपतन्तं मामुत्थाप्य पुत्रवत् परिष्वज्य स्नेहगद्गदमगादीत्, 'वत्स! श्रुतमस्त्येतदायुष्मतः (ठ) मगधराजमहिषीमुखात् यथा 'बालमर्थपालं मम हस्ते निक्षिप्य मणिभद्रस्य यक्षस्य कन्या तारावली अन्तर्हिता' इति। साऽहमस्मि धर्मपालसूनोः कामपालस्य गृहिणी। कथमपि भर्तृपाद-

---

कस्ते केन प्रकारेणात्र समायातः इति आश्चर्यं, हर्षः अभिनवयौवनोद्गमात् सुरूपतरुणसहवास इति आनन्दः, रागः पार्श्वस्थयुवकस्य मनोहरसौन्दर्यदर्शनेन आसक्तिः, शङ्का रहस्यागते सहसा उपस्थितेः देवानां दानवानां वा इयं माया न वा इति सन्देहः, यद्वा—एतदवस्थां मां कोऽपि पश्येत् चेत् इति आशङ्का, विलासविभ्रमौ स्त्रीणां सात्त्विकभावविशेषौ, एतैः व्यवहितानि विशेषेण अवहितानि, लक्ष्यविषयीभूतानीत्यर्थः, मिश्रितानीत्यर्थो वा। क्रीडाऽन्तराणि विशिष्टलज्जायुक्तानि, व्रीडामिश्रितानि वा। अवस्थाऽन्तराणि दशाविशेषान्।

(ज) सस्पृहेण साभिलाषेण। मधुरेति।—मधुरं मनोहरं यथा तथा, सङ्कुचितः विभागो यस्य तादृशेन। मन्दमन्दप्रसारितेन अल्पमल्पं कृत्वा विस्तारितेन। सचकितं सभयसम्भ्रमम्।

(झ) अलक्षयम् अपश्यम्।

(ञ) अत्यगात् अत्यगमत्, प्रभाता इत्यर्थः।

(ट) तत्त्वतः यथार्थतः। यावदायुः यावज्जीवनम्। प्रतिशयिष्यामि कामनापूरणार्थं दृढसङ्कल्पः सन् शयनं कृत्वा अवस्थास्ये इत्यर्थः, प्रतिशयश्च वासनाविशेषपूरणाय सुदृढं प्रतिज्ञाय कमपि देवताविशेषमुद्दिश्य अवस्थानम्। ("परस्मैपदमिच्छन्ति आत्मनेपदिनां क्वचित्" इत्यनुशासनात् शीधातोरात्मनेपदिनोऽपि अत्र परस्मैपदप्रयोगो बोद्धव्यः। "प्रतिशयिष्ये" इति पाठः साधुः)।

(ठ) आयुष्मतः दीर्घायुषः भवतः।

मूलात् निष्कारणकलुषिता प्रोष्य जातानुशया (ङ) स्वप्ने केनापि रक्षसा ग्रस्ताऽस्मि 'चण्डिकायां त्वयि वर्षमात्रं वसामि प्रवासदुःखाय' इति ब्रुवतेव अहमाविष्टा प्राबुध्ये। (ढ) गतश्च तदर्थं वर्षसहस्रदीर्घम्। अतीतायान्तु यामिन्यां 'श्रावस्त्यां देवदेवस्य उत्सवसमाजमवलोक्य पतिपादमूलं गमिष्यामि' इति प्रस्थितायामेव मयि त्वमत्रागत्य 'प्रतिपन्नोऽस्मि शरणमिहत्यां (ण) देवताम्' इति प्रसुप्तोऽसि। तदा तु न तत्त्वतः परिच्छिन्नो भवान्, परं शरणागतमस्यां महाटव्यां परित्यज्य गन्तुमयुक्तमिति त्वां राज्ञः श्रावस्तीश्वरस्य धर्मवर्द्धनस्य प्रासादे विश्रब्धप्रसुप्तायास्तद्दुहितुः नवमालिकायाः पार्श्वे शाययित्वा तमुद्देशम् (त) अगमम्। तत्र च गत्वा उत्सवमनुभूय भगवतीं गौरीमभिवाद्य सद्य एव प्रत्यापन्नमहिमा प्रतिनिवृत्य त्वां यथावदभ्यजानं, (थ) 'कथं मत्सुत एवायं वत्सस्यार्थपालस्य सखा प्रमतिरिति, दृश्यते चायमस्यामासक्तभावः, कन्या चैनं कामयते युवानम्, उभौ चेमौ लक्षसुप्तौ त्रपया साध्वसेन च न किञ्चिद्विख्याते। (द) गन्तव्यञ्च मया, साम्प्रतं नयामि तावत् यथास्थानं कुमारं, परतश्च कथमपि

---

(ङ) निष्कारणकलुषिता निष्कारणेन कारणाभावेनापि, अल्पेन वा कारणेन, कलुषिता दूषिता, मलिनितचित्ता इति यावत्। प्रोष्य प्रवासं गत्वा, देशान्तरे अवस्थायेत्यर्थः। जातानुशया उत्पन्नानुतापा।

(ढ) चण्डिकायाम् अतिकोपनस्वभावायां, ("चण्डस्त्वत्यन्तकोपनः" इत्यमरः)। आविष्टा आक्रान्ता, तेन रक्षसेति शेषः। प्राबुध्ये अजागरम्।

(ण) श्रावस्त्यां तदाख्यनगरे। देवदेवस्य महेश्वरस्य। उत्सवसमाजं यात्रोत्सवजनसमागमम्। प्रस्थितायां गमनोद्यतायामित्यर्थः। प्रतिपन्नः प्राप्तः। इहत्याम् अत्रत्याम्।

(त) तत्त्वतः यथार्थतः। परिच्छिन्नः विदितः इत्यर्थः। तम् उद्देशं देवदेवस्य उत्सवसमाजम्।

(थ) सद्य एव तत्क्षणमेव, गौरीप्रणामानन्तरमेव इत्यर्थः। प्रत्यापन्नमहिमा प्रत्यागतमाहात्म्या, पुनःप्राप्तपूर्वप्रभावा इत्यर्थः। यथावत् यथार्थतः। अभ्यजानम् अवगच्छम्, अवगतवत्यर्थः।

(द) विख्याते प्रकाशयतः।

म् (ध) इमं साधयिष्यति' इति भवन्तम् एतदेव पलाशयनमनैषम्।
च्छामि भर्तृपादमूलम्' इति प्राञ्जलिं मामभिधाय प्रायात्।
। कामवशः श्रावस्तीं गच्छन् पथि ताम्रचूडयुद्धनैपुण्यप्रदर्शनेन
द्धविटं मित्रत्वेनाभिगम्य तेनातितरां समादृतः 'स्मर्तव्योऽस्मि
इति तेन विसर्जितः श्रावस्त्याम् अध्वश्रान्तो वाह्योद्यानलता-
।) शायितोऽस्मि। हंसरवप्रबोधितश्च (प) उत्थाय मदन्तिकमायान्तीं
।कन्याम् अपश्यम्। सा तु हस्तवर्त्तिनि चित्रपटे लिखितं कमपि
ञ पर्य्यायेण (फ) अवलोकयन्ती सस्मितं मामवादीत्, 'सौम्य!
प्रवसि, दृश्यन्ते च ते अध्वश्रान्तानीव गात्राणि, तदद्य मद्गृहे
आतिथिसत्कारोऽनुभूयताम्' इति। अहञ्च तथेति तद्गृहगतो
स्नानभोजनादिना परिचरितः सुखं निषण्णस्तया रहसि
'महाभाग! किञ्चिदद्भुतमुपलब्धं भवता कुतोऽपि?' (ब) इति।
लब्धावसरः, 'भद्रे! देहि चित्रपटम्' इत्युक्त्वा तया दत्ते
चित्रितयुवकस्य पार्श्वे तामपि तथैव व्याजसुप्तां वल्लभा-
। 'काचिदेवंरूपा युवतिरीदृशस्य पुंसः पार्श्वे अरण्यान्यां (भ)
मयोपलब्धा, किमेष स्वप्नः' इत्यालपम्। हृष्टया तया सविस्तरं

---

...र्थं प्रयोजनम्, अनया कुमार्य्या मिलनरूपमित्यर्थः।

कामवशः अनङ्गायत्तः। ताम्रचूडेति।—ताम्रचूडानां कुक्कुटानां, ("ताम्रचूडः कुक्कुटश्चरणायुधः" इत्यमरः) युद्धं सङ्ग्रामः, तत्र नैपुण्यप्रदर्शनेन ...कटनेन। वृद्धविटं स्थविरं कमपि धूर्त्तम्। अतितराम् अत्यर्थम्। ...शाने उपविष्टे इत्यर्थः। विसर्जितः परित्यक्तः। वाह्योद्यानलता-...लतावाटिकाभोगे स्थितोपवनमध्यस्थलतावेष्टितगृहे।

हंसरवप्रबोधितः हंसध्वनिना जागरितः।

पर्य्यायेण क्रमेण, क्रमानुसारेणेत्यर्थः, वारमेकं चित्रपटं वारमेकञ्च ...भावः।

परिचरितः सेवितः। निषण्णः उपविष्टः। उपलब्धम् अनुभूतं, दृष्ट-...कुतोऽपि कुत्रापि।

लब्धावसरः प्राप्तावकाशः, उपयुक्तसमयं विविच्य इत्यर्थः। तां श्रावस्ती-...ं भवमालिकाम्। अरण्यान्यां महारण्यमध्ये।

पृष्टः सर्वं वृत्तान्तमकथयम्। सा तु सख्या (म) मन्निमित्तानि दशाऽन्तराणि अवर्णयत्। अहन्तु तदाकर्ण्य 'यदि तव सख्या मय्यनुग्रहः, तदा कानिचित् दिनानि गमय, कमपि उपायं शीघ्रमाचरिष्यामि' इति तां विसृज्य तेन मित्रेण वृद्धविटेन समगंसि। (य) तेनापि पूर्ववत् समादृतः 'किमर्थमचिरात् प्रत्यागतः?' इति पृष्टस्तमवादिषं, 'मित्र! श्रावस्तीश्वरस्य दुहिता प्रत्यादेश इव श्रियः नवमालिका नाम मया कथमपि दृष्टा कामनाराचपङ्क्तिमिव कटाक्षपङ्क्तिं मां प्रति व्यकिरत्। (र) तच्छल्योद्धरणाक्षमश्च त्वदृते (ल) नेतरोऽस्ति वैद्य इति प्रत्यागतोऽस्मि, तदत्र कमप्युपायं कर्तुं प्रसीद। मां स्त्रीवेषधारिणीं निजकन्यां कृत्वा त्वं धर्मासनगतं धर्मवर्द्धनं समेत्य वक्ष्यसि, 'ममेयमेकैव कन्या, जातमात्रायामस्यां जनन्यस्याः संस्थिता, कथमपि (व) एनामवर्द्धयम्। एतदर्थमेव विद्यामयं शुल्कमर्जयितुमवन्तीं गतोऽस्मद्वैवाहिकतनयः। (श) तस्मै दित्सिता चेयं तरुणीभूता, स च विलम्बितः, तेन तमानीय पाणिमस्या ग्राहयित्वा सन्न्यसिष्ये। (ष) दुरभिरक्ष्यतया

(म) सख्याः सहचर्याः, राजकन्यायाः इत्यर्थः।

(य) गमय अतिवाहय। तेन कुक्कुटयुद्धकाले लब्धेन। समगंसि सम्मिलितोऽभूवम्।

(र) प्रत्यादेशः निराकृतिः, प्रत्याख्यानमित्यर्थः। श्रियः लक्ष्म्याः। श्रियः प्रत्यादेशः सौन्दर्येण लक्ष्मीमपि पराजितवतीत्यर्थः। कामनाराचपङ्क्तिं मदनशरराजीम्। व्यकिरत व्याक्षिपत।

(ल) त्वदृते।—तच्छल्यस्य हृदयप्रविष्टस्य कामनाराचस्य, उद्धरणक्षमः उत्पाटनसमर्थः। त्वदृते त्वां विना।

(व) निजकन्यां कृत्वा निजतनया इति परिचयं दत्त्वा इत्यर्थः। संस्थिता मृता, ("परासुप्राप्तपञ्चत्व-परेतप्रेतसंस्थिताः। मृतप्रमीतौ त्रिष्वेते" इत्यमरः)। कथमपि अतिक्लेशेन।

(श) एतदर्थमेव एतत्कन्यालाभनिमित्तमेव। विद्यामयं विद्यात्मकम्। शुल्कं पणं, कन्यापक्षीयेभ्यो देयं धनमित्यर्थः, विदुषे एव वराय कन्येषा देया, न तु अन्यस्मै इति भावः। अस्मद्वैवाहिकतनयः अस्माकं विवाहदानयोग्यवंशस्य कुमारः।

(ष) सन्न्यसिष्ये सन्न्यासाश्रमं ग्रहीष्यामि।

च दुहितृत्वां विशेषतो मुक्तशैशवानाम् (ङ) अमातृकाणाम् इह देवं पितृमातृस्थानीयमागतोऽस्मि । सैषा भवद्भुजतरुच्छायायामखण्डचरिता तावदास्तां यावदस्याः पाणिग्राहकम् (ङ) आनयेयम्' इति । स एवमुक्तो नियतमङ्गीकरिष्यति, वासयिष्यति च स्वदुहितृसन्निधौ माम् । ततश्च अहं कियन्तं कालं तया रहसि विहृत्य पुनः कथमपि (क) त्वत्सकाशमागमिष्यामि । ततश्च नृपात्मजां मामितस्ततोऽन्विष्य अनासादयन्तीं 'तया विना न भोक्ष्ये' इति रुदतीमालोक्य परिजनेषु व्याकुलेषु महति कोलाहले किंकर्त्तव्यतामूढे च राजनि त्वं मां जामातरं कृत्वा (ख) राजसभां गत्वा वक्ष्यसि 'देव ! स एष मे जामाता समागतः, अधीती चतुर्ष्वाम्नायेषु विविधविद्याविचक्षणः चतुःषष्टिकलानिपुणः गजतुरगरथतन्त्रवित् धनुर्वेदविशारदः महागुणशाली, तदस्मै दुहितरं समर्प्य अन्त्यमाश्रमम् (ग) आश्रयेयम्' इति । स राजा इदमाकर्ण्य विवर्णवदनः सामात्यस्त्वामनुनेतुमतिमात्रं यत्नं करिष्यति । त्वन्तु तेषु अदत्तकर्णश्चिरं रुदित्वा राजमन्दिरद्वारे चिताऽधिरोहणायोपक्रमिष्यसे, तदैव स त्वत्पादयोर्निपत्य यथाऽभिलषितैरर्थैस्त्वां परितोष्य दुहितरं मह्यं दत्त्वा मद्योग्यतासमाराधितः (घ) समस्तमेव राज्यभारं मयि समर्पयिष्यति, सोऽयमुपायोऽनुष्ठीयताम्' इति ।

---

(ङ) दुर्लभस्त्र्यतया दुःखेन संरक्षणीयतया । मुक्तशैशवानाम् अतिक्रान्तबाल्यभावानां, किशोरीणां तरुणीनां वा इत्यर्थः ।

(ङ) पाणिग्राहकं वरम् ।

(क) तया नृपकन्यकया । कथमपि केनापि उपायेन ।

(ख) अनासादयन्तीम् अप्राप्नुवानाम् । जामातरं कृत्वा अयं मम जामाता इति परिचय दत्त्वा ।

(ग) अधीती अधीतनिखिलवेदः, ("योऽधीतकृत्स्नवेदः स्यात् सोऽधीतीत्युच्यते बुधैः" इति कोषः । अधीतमनेन इति इनिः, तद्योगे कर्मणि सप्तमी ) । आम्नायेषु ऋग्यजुःसामाथर्वाख्येषु वेदेषु । अन्त्यं चरमम्, आश्रमं सन्न्यासाश्रमम् ।

(घ) तेषु तेषामनुनयवाक्येषु । अदत्तकर्णः कर्णमदत्त्वा, तेषां वाक्यमश्रुत्वेत्यर्थः । उपक्रमिष्यसे प्रारप्स्यसे, उद्योगं करिष्यसि इत्यर्थः । मद्योग्यतेति ।—मम योग्यतया कार्यनैपुण्येन, समाराधितः संतोषितः, प्रीणितः इत्यर्थः ।

सोऽपि विटाग्रणीरसकृदभ्यस्तकपटप्रपञ्चः पाञ्चालशर्मा यथोक्तमभ्यधिकञ्च अन्वतिष्ठत्, आसीच्च मम इष्टसिद्धिः, अन्वभवञ्च मधुकर इव नवमालिकामार्द्रसुमनसम्। (ङ) ततश्च अस्य राज्ञः सिंहवर्मणः साहाय्यदानं सुहृत्सङ्केतभूमिगमनञ्चापेक्ष्य सर्वबलसमूहेन (च) चम्पामभिगतो दैवात् देवदर्शनसुखम् अनुभवामि" इति।

श्रुत्वैतत् देवो राजवाहनः सस्मितं "विलासप्रायमूर्जितं मृदुप्रायं चेष्टितम्, इष्ट एष मार्गः प्रज्ञावताम्" इति प्रमतिमभिनन्दयन् (छ) मित्रगुप्तं प्रति वक्तुमादिदेश।

इति पञ्चमोच्छ्वासः।

---

## अथ षष्ठोच्छ्वासः।

## मित्रगुप्तचरितम्।

सोऽब्रवीत् "देव! सोऽहं भवदन्वेषणपरः कदाचित् दामलिप्ताख्यस्य नगरस्य बहिरुद्याने महति उत्सवे वर्तमाने कमपि विजने वीणया (क) आत्मानं विनोदयन्तं कोशदासनामानं युवानमपश्यम्,

---

(ङ) विटाग्रणीः धूर्त्तश्रेष्ठः। असकृदिति।—असकृत् वारंवारम्, अभ्यस्तः शिक्षितः, कपटानां छलानां, प्रपञ्चः विस्तरः येन तथोक्तः। आर्द्रेति।—आर्द्रं सरसं, कोमलमित्यर्थः, सु शोभनं, मनः अन्तःकरणं यस्यास्तादृशीम; अन्यत्र—आर्द्राः सरसाः, सद्यः प्रस्फुटिता इत्यर्थः, सुमनसः पुष्पाणि यस्यास्तादृशीम्। नवमालिकां तदाख्यां कन्यकां, तदाख्यपुष्पवल्लीविशेषञ्च।

(च) सर्वबलसमूहेन चतुरङ्गसैन्यसमूहेन।

(छ) विलासप्रायं विलासबहुलम्। ऊर्जितं वृद्धियुक्तम्, आभ्युदयिकमित्यर्थः। मृदुप्रायम् अतिकोमलं, हिंसादिनिष्ठुरतावर्जितमिति भावः। इष्टः प्रियः, अभिमतः इत्यर्थः। मार्गः पन्थाः, उपायः इति यावत्। प्रज्ञावतां बुद्धिमताम्। अभिनन्दयन् प्रशंसन्।

---

(क) वीणया वीणावादनेन।

अपृच्छच्च, 'भद्र ! को नाम अयमुत्सवः ? किमर्थं वा समारब्धः ? कथं वा भवान् उत्सवमनादृत्य एकान्ते (ख) विषण्ण इव तिष्ठति ?' इति। सोऽभ्यधात्, 'सौम्य ! सुह्मपतिस्तुङ्गधन्वा नामानपत्यः अमुष्मिन् आयतने स्थितां विन्ध्यवासिनीम् (ग) आराधयन् अपत्यद्वयं प्रार्थयामास। अनया किल स्वप्ने समादिष्टम्, 'उत्पत्स्यते तव एकः पुत्रः, कन्या च एका, स तु तस्याः पाणिग्राहकमनुजीविष्यति। (घ) सा तु सप्तमात् वर्षादारभ्य आ-परिणयं प्रतिमासं कृत्तिकासु कन्दुकनृत्येन गुणवद्भर्तृलाभाय मामाराधयतु, यत्राभिलषेत् सा अमुष्मै (ङ) देया, स च उत्सवः कन्दुकोत्सवनामास्तु' इति। ततोऽल्पेनैव कालेन राजमहिषी मेदिनी नामकं पुत्रमसूत कन्याञ्च एकाम्। सा कन्दुकवती नाम अद्य कन्दुकनृत्येन देवीमाराधयिष्यति, तन्निमित्तोऽयमुत्सवः। तस्यास्तु सखी चन्द्रसेना नाम मम प्रिया आसीत्। सा साम्प्रतं राजपुत्रेण भीमधन्वना बलादाक्रान्ता। (च) तदहमुत्कण्ठितो मन्मथशरविद्धचेताः कलेन वीणारवेणात्मानं किञ्चिदाश्वासयन् विविक्तमध्यासे' (छ) इति। अस्मिन्नेव क्षणे काचिदङ्गना तमुद्देशमागमत्। दृष्ट्वैव स तामुत्फुल्लदृष्टिरभ्यधात्, 'सा इयं मे प्राणसमा, यद्विरहो दहन इव (ज) दहति माम्। एनामपहरति

---

(ख) समारब्धः प्रक्रान्तः। एकान्ते निर्जने।

(ग) अनपत्यः अपुत्रः। आयतने स्थाने। विन्ध्यवासिनीं तदाख्यां देवीम्।

(घ) अनया विन्ध्यवासिन्या। समादिष्टम् आज्ञप्तम्। सः पुत्रः। तस्याः कन्यायाः। पाणिग्राहकं भर्तारम्। अनुजीविष्यति सेविष्यते, तदधीनो भविष्यतीत्यर्थः।

(ङ) आ-परिणयं विवाहपर्यन्तम्। कृत्तिकासु कृत्तिकानक्षत्रे। ("दारवर्षासिकताप्सरसौकोवस्वान्तवाचिदन्ताबहुलाकृत्तिकाभवलाजैश्यः पुंलिङ्गदाश्च नित्यं स्युः" इत्यनुशासनात् कृत्तिकासु इत्यत्र बहुवचनान्तत्वम्)। कन्दुकनृत्येन कन्दुकेन कन्दुकक्रीडया सह, यत् नृत्यं नर्तनं तेन। अमुष्मै अभिलषितपुरुषाय।

(च) बलात् बलमाश्रित्य। आक्रान्ता अवरुद्धा इत्यर्थः।

(छ) कलेन मधुरास्फुटेन। आश्वासयन् सान्त्वयन्। विविक्तं निर्जनम्। अध्यासे अधितिष्ठामि।

(ज) उत्फुल्लदृष्टिः हर्षविकसितनेत्रः। दहन इव अनल इव।

राजसूनुः, न च शक्ष्यामि तस्य किमपि प्रतिविधातुम्, अतोऽद्य अनया आत्मानं सुदृष्टं कारयित्वा परित्यक्ष्यामि निरुपायान् (झ) प्राणान्' इति। सा तु रुदती कथमपि प्रियमाश्वास्य अब्रवीत्, 'नाथ ! नय माभीप्सितं देशम् ।' सोऽवदत् मां, 'भद्र ! भवद्दृष्टेषु राष्ट्रेषु (ञ) कतमत् सुरम्यं सुलभञ्च ?'। तमहमोषत् विहस्याब्रवं, 'भद्र ! विस्तीर्णायमर्णवनेमिः, न पर्य्यन्तः (ट) अस्ति स्थाने स्थाने रम्याणां जनपदानाम्। न चेदिह युवयोः सुखनिवासोपायं कर्त्तुं शक्नुयां ततोऽहमेव भवेयमध्वदर्शी।' (ठ) तावत्तेव किमपि नूपुरक्वणितमाविरभूत्। (ड) ततश्च असौ जातसम्भ्रमा (ढ) 'प्राप्तेव भर्त्तृदारिका, अनिषिद्धदर्शना च इयमस्मिन् कन्दुकोत्सवे, सफलमस्तु युष्मच्चक्षुः, आगच्छतं द्रष्टुम्, अहमस्याः पार्श्ववर्त्तिनी भवेयम्' इत्ययासीत्। तामन्वयाव च (ण) आवाम्। अहन्तु तां कन्दुकेन क्रीडन्तीं साक्षाल्लक्ष्मीमिव मनोभुवः (त) समवलोक्य नितान्तविह्वलतामयासिषम्। साऽपि मामवलोक्य किमपि अवस्थान्तरमापद्यमाना कथञ्चित् कन्दुकेन यथायथं विहृत्य चन्द्रसेनादिभिः सखीभिः सह भगवतीं विन्ध्यवासिनीं प्रणिपत्य मनसा मे सानुरागेणेव परिजनेनानुगम्यमाना कुवलयशरमिव कुसुमशरस्य मयि अपाङ्गं विक्षिपन्ती

---

(झ) प्रतिविधातुं प्रतिकर्त्तुम्। अनया प्राणसमया प्रियया। निरुपायान् प्रतिकारकरणासमर्थान्।

(ञ) राष्ट्रेषु राज्येषु, देशेषु इति यावत्।

(ट) अर्णवनेमिः अर्णवः समुद्र एव नेमिः चक्रप्रान्तः इव प्रान्त इत्यर्थः, चक्रप्रान्तस्थसञ्चालविशेष इत्यर्थो वा यस्यास्तादृशी, समुद्रान्ता इति यावत्, पृथिवीति शेषः। पर्य्यन्तः सीमा, शेष इत्यर्थः।

(ठ) अध्वदर्शी पथप्रदर्शकः।

(ड) तावत्तेव तत्कालेनैव। आविरभूत् उद्गमत्।

(ढ) असौ चन्द्रसेना। जातसम्भ्रमा व्यस्ता।

(ण) अन्वयाव अन्वगच्छाव।

(त) मनोभुवः कामस्य।

सापदेशम् (थ) असकृदावर्त्यमानवदनचन्द्रमण्डलतया स्वहृदयमिव मत्समीपे प्रेषितं प्रतिनिवृत्तं न वेत्यालोकयन्ती कुमारीपुरमगात् ।

अहञ्च कामवशः कोशदासेन स्वं गेहं नीत्वा स्नानभोजनादिकं कारितोऽस्मि । सायञ्च चन्द्रसेना समुपेत्य रहसि मां प्रणम्य कोशदासेन सानन्दं परिष्वक्ता (द) समुपविश्य अभाषत, 'नाथ ! मा व्यथिष्ठाः, सिद्धं नः समीहितम्, अद्य खलु कन्दुकोत्सवे युवानमेनमवहसितमनोभवाकारमभिलषन्ती रोषादिव हरद्विषा अतिमात्रमायास्यते (ध) राजपुत्री । सोऽयमर्थो (न) मया राजमहिष्यै, तया च राज्ञे निवेदयिष्यते । विदितार्थस्तु नृपः त्वां दुहितरमस्मै प्रदास्यति, ततश्च राजपुत्रेण अस्य महाभागस्यानुजीविना (प) भाव्यम्, एष दैवताऽऽदिष्टो विधिः । एतदायत्ते च राज्ये नालमेव भीमधन्वा (फ) मामेवं रोद्धुम् । तत् सहतां त्रिचतुराणि दिनानि' इत्यभिधाय प्रियमालिङ्ग्य प्रायासीत् । तदाकर्ण्य मम कोशदासस्य च बहु विकल्पयतोः कथञ्चिदचीयत क्षपा । (ब)

अन्येद्युर्भीमधन्वा कथञ्चित् विदितमद्वृत्तान्तः केनचित् अपदेशेन मां स्वावासं नीत्वा राजवदुपचरितं पर्य्यङ्कोपरि सुखसुप्तं पूर्वसङ्केतितैः

---

(थ) कुसुमशरमिव नीलोत्पलमयबाणमिव । अपाङ्गं कटाक्षमित्यर्थः । सापदेशं सच्छलं, विषयान्तरदर्शनच्छलेन इत्यर्थः ।

(द) परिष्वक्ता आलिङ्गिता ।

(ध) व्यथिष्ठाः पीडामनुभव । समीहितं मनोरथम् । अवहसितमनोभवाकारम् अवज्ञातकन्दर्पसौन्दर्यं, सौन्दर्येण काममपि अभिभवन्तमित्यर्थः । हरद्विषा कामेन । आयास्यते क्लिश्यते ।

(न) अयमर्थः राजकन्यायाः अस्मिन् यूनि अनुरागः ।

(प) राजपुत्रेण भीमधन्वना । अनुजीविना अनुचरेण, अधीनेन इत्यर्थः ।

(फ) एतदायत्ते एतस्य मित्रगृहस्य, आयत्ते अधीने । अलं समर्थः, ("अलं व्यर्थसमर्थयोः" इत्यमरः ) । भीमधन्वा राजपुत्रः ।

(ब) विकल्पयतोः विविधकल्पनां कुर्वतोः । अचीयत अत्यगच्छत्, अतीतेत्यर्थः । क्षपा रात्रिः ।

पूर्वसङ्केतैर्बन्धयित्वा आयसनिगडेन (भ) सागराम्भसि न्यक्षेपयत्। अहन्तु निरवलम्बनः भुजाभ्यामितस्ततः प्लवमानः किमपि दैवदत्तं काष्ठफलकमुपश्लिष्य तावदप्लोषि यावदपासरत् वासरः शर्वरी च। (म) प्रातश्चैकमदृश्यत वहित्रम्। (य) तत्र स्थिता यवना मामुद्धृत्य रामेषुनाम्ने नाविकनायकाय समर्पयन्। क्षणे चास्मिन् नैकनौपरिवृतं कमपि नौदस्युम् अभिधावन्तं (र) दृष्ट्वा भयमापुर्यवनाः। प्रतिनावश्चातिवेगेन श्वान इव वराहमस्मत्पोतं पर्य्यरुन्धन्; प्रावर्त्तत सम्प्रहारः, (ल) पराजिता यवनाः। तानहमगतीन् समाश्वास्यावादिषम्, 'अपनयत मे निगडबन्धनम्, अवसादयामि वः सपत्नान्' (व) इति। अंशितबन्धनश्च तैरहं तान् सर्वान् प्रतिभटान् भल्लवर्षिणा धनुषा लवलवीकृताङ्गान् (श) अकार्षम्। अभिपत्य च हतविध्वस्तं तत्पोतम् अमुत्र स्थितं नाविकनायकं जीवग्राहम् (ष)

---

(भ) पूर्वसङ्केतैः प्राक्कृतसङ्केतैः, पूर्वमेव आदिष्टैरित्यर्थः। आयसनिगडेन लौहशृङ्खलेन।

(म) निरवलम्बनः निराश्रयः। प्लवमानः तरन्। अप्लोषि समतारिषं देहं लघुं कृत्वा हस्तपादभरेण जलोपरि उत्तानतया अस्थामित्यर्थः। अपासरत् अपागच्छत्। वासरः दिवसः। शर्वरी रात्रिः।

(य) वहित्रं समुद्रयानम्।

(र) नैकनौपरिवृतं बहुनौकावेष्टितम्। नौदस्युं नौकारोहणेन जनानां धनमपहरन्तम्। नाविकनायकाय नौकाधिपतये। अभिधावन्तं द्रुतमागच्छन्तम्।

(ल) प्रतिनावः विपक्षनौकाः, दस्यूनां नौका इत्यर्थः। श्वानः कुक्कुराः। अस्मत्पोतम् अस्माकं वाहनम्। पर्य्यरुन्धन् समन्ततः अवेष्टयन्। सम्प्रहारः युद्धम्।

(व) तान् पराजितयवनान्। अगतीन् निरुपायान्। निगडबन्धनं शृङ्खलेन बन्धनम्। अपनयत मोचयत। अवसादयामि नाशयामि। वः युष्माकम्। सपत्नान् शत्रून्।

(श) अंशितबन्धनः मुक्तबन्धनः। प्रतिभटान् विपक्षयोधान्, शत्रूनित्यर्थः। भल्लवर्षिणा भल्लं तदाख्यास्त्रविशेषं, वर्षति निक्षिपति इति तथोक्तेन। लवेति।—लवलवीकृतानि खण्डखण्डीकृतानि, अङ्गानि अवयवा येषां तादृशान्।

(ष) अभिपत्य लम्फप्रदानेन समागत्य इत्यर्थः। हतेति।—हतं विनष्टं, निहतयोधं पलायितयोधं वा इत्यर्थः, तच्च तत् विध्वस्तं भग्नञ्चेति तादृशम्। अमुत्र

अग्रद्वीपम् । असौ च स एव भीमधन्वा । (स) तत्राहं जातव्रीड़मभाषे, 'तात ! दृष्टानि कृतान्तविलसितानि ?' । (ह) ते तु सांयात्रिका मदीयेनैव निगड़ेन तम् (क) अतिगाढ़ं बद्ध्वा हर्षरवमकुर्वन्, माञ्चापूजयन् । दुर्वारा तु सा नौरननुकूलवाततुन्ना कमपि द्वीपमाश्लिष्टवती । (ख) तत्रासीन्महा-शैलः । अहन्तु तस्य रम्यतामवलोकयितुमवतीर्णः इतस्ततो विचरन् परमकमनीयमेकं सरः समभ्यगाम् । (ग) स्नातश्च तत्र कांश्चिदमृतस्वादून् विसभङ्गानास्वादयन् तीरवर्त्तिना केनापि भीमरूपेण ब्रह्मराक्षसेनाभि-पत्य 'कोऽसि ? कुतस्त्यो वा ?' इति निर्भर्त्सयताऽभिहितोऽहं निर्भयः समभ्यधां, (घ) 'सौम्य ! अहमस्मि द्विजन्मा, शत्रुहस्तादर्णवम् अर्णवात् यवननावं यवननावः चित्रमेनं पर्वतं प्राप्तो यदृच्छया (ङ) अस्मिन् सरसि विश्रमामि' इति । सोऽब्रूत, 'न चेत् ब्रवीषि प्रश्नानश्नामि (च)

---

दस्युनौकायाम् । जीवग्राहं जीवस्य जीवनस्य, ग्राहः ग्रहणं यस्मिन् कर्मणि तद्यथा तथा ; यद्वा—जीवस्य जीवत एव, ग्राहः ग्रहणं यस्मिन् कर्मणि तद्यथा तथा ।

(स) असौ नाविकनायकः । भीमधन्वा कन्दुकवत्याः भ्राता ।

(ह) जातव्रीडं लज्जितम् । कृतान्तविलसितानि दैवविचेष्टितानि, ("कृतान्तो यमदैवयोः" इत्यमरः) ।

(क) सांयात्रिकाः पोतवणिजः, यवना इति यावत्, ("सांयात्रिकः पोतवणिक्" इत्यमरः) । तं भीमधन्वानम् ।

(ख) दुर्वारा दुःखेन वारयितुं शक्या, अनभिमतपथगमनात् परावर्त्तितुमशक्या इत्यर्थः । अननुकूलवाततुन्ना प्रतिकूलवायुचालिता । कमपि अज्ञातनामानम् । आश्लिष्टवती आश्रितवती, संलग्नवतीत्यर्थः ।

(ग) परमकमनीयं सुमनोहरम् । समभ्यगाम् अभ्यगमं, प्रापमित्यर्थः ।

(घ) अमृतस्वादून् सुधावत् मधुरान् । विसभङ्गान् मृणालखण्डान् । भीम-रूपेण भयङ्कराकारेण । अभिपत्य समागत्य । कुतस्त्यः कस्मादागतः, (पञ्चम्यन्तात् त्यप्) कस्मिन् देशे जातः इत्यर्थो वा । निर्भर्त्सयता तिरस्कुर्वता, तर्जयता इत्यर्थः । समभ्यधाम् अवादिषम् ।

(ङ) द्विजन्मा ब्राह्मणः । चित्रम् अद्भुतं, मनोज्ञमित्यर्थः । यदृच्छया स्वैरितया, स्वेच्छया इत्यर्थः, ("यदृच्छा स्वैरिता" इत्यमरः) यदृच्छया दैवगत्या इत्यर्थो वा ।

(च) प्रश्नान् जिज्ञासायाः प्रत्युत्तराणीत्यर्थः । अश्नामि भक्षयामि ।

त्वाम्' इति। मयोक्तं, 'पृच्छ तावत्।' अथाऽऽवयोरेकयाऽऽर्य्यया आसीत् संलापः। (छ)

'किं क्रूरम्? स्त्रीहृदयं, किं गृहिणः प्रियहिताय? दारगुणाः।
कः कामः? सङ्कल्पः, किं दुष्करसाधनम्? प्रज्ञा॥' (ज)

'तत्र धूमिनी-गोमिनी-निम्बवती-नितम्बवत्यः प्रमाणम्' (झ) इति उक्ते मया सोऽब्रूत, 'कथय कीदृश्यस्ताः?' इति। ततो मयोक्तं, 'त्रिगर्त्ताख्ये जनपदे महति दुर्भिक्षे वर्त्तमाने त्रयो भ्रातरः धनक-धान्यक-धन्यकाख्याः क्रमेण सर्वाणि धनानि अपत्यानि ज्येष्ठमध्यमभार्य्ये अपि भक्षयित्वा 'कनिष्ठभार्य्या धूमिनी श्वो भक्षणीया' इति समकल्पयन्। (ञ) कनिष्ठस्तु प्रियां स्वामत्तुमक्षमस्तस्यामेव यामिन्यां पलाय्य मार्गक्लान्तां कान्तां स्वमांसासृगपनीतक्षुत्पिपासामुद्वहन् वनं प्रविष्टः कमपि विकलेन्द्रियम् (ट)

---

(छ) आर्य्यया आर्य्याच्छन्दोनिबद्धेन श्लोकेन इत्यर्थः। संलापः परस्परभाषणं, ("संलापो भाषणं मिथः" इत्यमरः)।

(ज) किमित्यादि।—क्रूरं निष्ठुरं, किम? किं वस्तु? इति प्रश्नः। स्त्रीहृदयं नारीणामन्तःकरणं, क्रूरमिति शेषः, इति प्रत्युत्तरम। गृहिणः गृहस्थस्य, प्रियहिताय प्रीतिजनकहितानुष्ठानाय, प्रीत्यै उपकाराय च इत्यर्थौ वा, किम्? किं वस्तु? इति प्रश्नः। दारगुणाः भार्य्यायाः कर्मनैपुण्यपातिव्रत्यादयः भावाः, प्रियहिताय इति शेषः, इत्युत्तरम्। कामः अभिलाषः, इष्टसाधनमिति यावत्, कः? किं वस्तु? इति प्रश्नः। सङ्कल्पः निश्चयात्मिका मनोवृत्तिरित्यर्थः, निश्चय इति यावत्, (सङ्कल्पः कर्म मानसम्" इत्यमरः) इष्टसिद्धौ दृढचित्तता इति भावः, काम इति शेषः, इत्युत्तरम्। दुष्करसाधनं दुःसाध्यकार्य्यसाधनोपाय इत्यर्थः, किम्? किं वस्तु? इति प्रश्नः। प्रज्ञा बुद्धिः, प्रतिभेति यावत्, दुष्करसाधनीति शेषः, इत्युत्तरम्।

(झ) तत्र स्त्रीहृदयादीनां क्रूरत्वादिविषये। प्रमाणं दृष्टान्तः।

(ञ) जनपदे देशे। ज्येष्ठमध्यमभार्य्ये धनकधान्यकयोः ज्येष्ठमध्यमभ्रात्रोः पत्नीद्वयम्। कनिष्ठभार्य्या धन्यकस्य कनिष्ठभ्रातुः पत्नी। श्वः परदिने। समकल्पयन् मनसि अचिन्तयन्, निरधारयन्नित्यर्थः।

(ट) स्वां निजाम्। अत्तुं भक्षयितुम्। मार्गक्लान्तां पथश्रान्ताम्। स्वेति।—

अवनौ लुठन्तमद्राक्षीत्। जातदयश्च तमपि स्कन्धेनोद्वहन् कन्दमूलफलबहुले वनोद्देशे यत्नरचितपर्णशालो वसन् तमपि विकलमिङ्गुदीतैलादिभिः विरोपितव्रणमामिषादिना स्वनिर्विशेषमपुषत्। (ठ) एकदा मृगयार्थं गते पत्यौ सा धूमिनी अनिच्छताऽपि तेन विकलेन बलात्कारमरीरमत्, न्यक्षिपच्च पतिमागतं जलार्थिनं कूपे। (ड) अथ तं विकलं स्कन्धे गृहीत्वा देशान्तरं गता 'पतिव्रता' इति तत्तद्देशीयजनेभ्यः प्रशंसाः पूजाश्च लेभे। अथ कथञ्चित् कूपात् कैश्चित् कृपालुभिरुद्धृतम् अन्तिके चरन्तं पतिं धन्यकमालोक्य सा पापा 'येन मे पतिर्विकलीकृतः स दुरात्मा अयम्' इति तस्य साधोश्चित्रवधमज्ञेन राज्ञा (ढ) समादेशयाञ्चकार। स तु वराकः सशेषत्वादायुषः 'यदि असौ विकलः ममापराधं वदेत् तदा मे युक्तो दण्डः' इत्यदीनमाचष्ट। (ण) तथा कृते स

---

स्वस्य आत्मनः, मांसासृग्भ्यां मांसरक्ताभ्याम्, अपनीते दूरीकृते, क्षुत्पिपासे क्षुधातृषे यस्यास्तादृशीम्। उद्वहन् स्कन्धे कुर्वन्। विकलेन्द्रियं विनष्टचक्षुःकर्णादिकम्।

(ठ) वनोद्देशे अरण्यप्रदेशे। यत्नेति।—यत्नेन बहुक्लेशेनेत्यर्थः, विशेषचेष्टया इत्यर्थो वा, रचिता निर्मिता, पर्णशाला पत्रनिर्मितकुटीरं येन तादृशः। वसन् तिष्ठन्। विकलं विकृतेन्द्रियम्। इङ्गुदीतैलादिभिः इङ्गुदी तापसतरुः, ("इङ्गुदी तापसतरुः" इत्यमरः) तस्याः तैलादिभिः फलनिष्काशितस्नेहादिभिः। विरोपितः व्रणा विरोपिताः पूर्त्तिं प्रापिताः, अपनीता इत्यर्थः, व्रणाः क्षतानि यस्य तादृशम्। आमिषादिना मांसादिना, मांसादिकं भोजयित्वा इत्यर्थः। स्वनिर्विशेषम् आत्मसदृशम्। अपुषत् पोषयामास, पालितवान् इत्यर्थः।

(ड) पत्यौ भर्त्तरि, धन्यके इति यावत्। आगतं मृगयाव्यापारात् प्रत्यागतम्। जलार्थिनं जलप्रार्थिनं, पानाय कूपात् जलमुत्तोलयन्तमिति यावत्।

(ढ) कथञ्चित् अतिक्लेशेन। अन्तिके समीपे, निजवासस्थानस्येति शेषः। चरन्तं भ्रमन्तम्। सा धूमिनी। पापा पापाचारा। तस्य धन्यकस्य। साधोः सत्पुरुषस्य, निरपराधस्येत्यर्थः। चित्रवधं कुक्कुरदंशनादिरूपनानाविधोपायेन हत्याम्। अज्ञेन यथायथवृत्तान्तमजानता। राज्ञा धूमिन्यधिष्ठितदेशाधिपेन, अवन्तीनाथेनेति भावः।

(ण) वराकः दीनः, निरपराध इति यावत्। सशेषत्वात् अवशिष्टत्वात्, वर्त्तमानत्वादित्यर्थः। अदीनम् अकातरं, निर्भयमित्यर्थः। आचष्ट अकथयत्।

विक्लवः पर्य्यश्रुः पादपतितस्तस्य साधोस्तत् सुकृतम् (त) असत्याश्च तस्यास्तथाभूतं दुश्चरितमाचचक्षे। ततः कुपितो राजा तां पापां विरूपितमुखीं कृत्वा चण्डकं प्रसादयामास। (थ) तत् ब्रवीमि, 'क्रूरं स्त्रीहृदयम्' इति।

अस्ति द्रविड़देशेषु काञ्ची नाम नगरी। तस्यां शक्तिकुमारो नाम कश्चिन्महाधनो वणिक्सुतो गुणवतीं भार्य्यां परिणेतुमितस्ततो ज्योतिषिकच्छद्मना परिभ्रमन् कामपि कन्यकां परीक्ष्य 'सुलक्षणा' इति निश्चित्य शालिप्रस्थमेकं तस्यै दत्त्वाऽब्रवीत्, 'भद्रे! शक्नोषि किमनेन शालिप्रस्थेन गुणवदन्नमस्मानभ्यवहारयितुम्?' (द) इति। सा तु सलज्जस्मितं वृद्धदासीहस्तेन तं शालिप्रस्थमादाय तं वणिक्पुत्रमुपवेश्य विविधकौशलेन सुचारु अन्नं पक्त्वा यथोचितं स्नानाहारादिप्रदानेन पर्य्यतोषयत्। परितुष्टश्च स तां विधिवदुपयम्य गृहमनैषीत्। नीत्वैतदनपेक्षः कामपि गणिकामवरोधम् अकरोत्। तामप्यसौ प्रियसखीमिवोपाचरत्, पतिञ्च दैवतमिव अनलसा पर्य्यचरत्, अन्वतिष्ठच्च गृहकार्य्याणि यथायथम्, अकरोच्च परिजनं दाक्षिण्येन (ध) स्ववशम्। ततश्च तद्गुणवशीकृतो भर्त्ता सर्वमेव कुटुम्बं

---

(त) पर्य्यश्रुः विगलद्बाष्पः। तत सुकृतं पूर्वकृतमुपकारम्।

(थ) विरूपितमुखीं विकृतवदनां, नासाकर्णादिच्छेदनेन इति भावः। प्रसादयामास अनुनयामास।

(द) ज्योतिषिकच्छद्मना दैवज्ञच्छलेन, कपटेन दैवज्ञरूपेण आत्मपरिचयं दत्त्वेत्यर्थः। शालिप्रस्थं शरावद्वयपरिमितं हैमन्तिकधान्यविशेषम्। भद्रे! सुचरिते!। गुणवदन्नं सुस्वादु विविधव्यञ्जनसमन्वितं भोज्यं, तृप्तिजनकं भोज्यमिति यावत्। अभ्यवहारयितुं भोजयितुम्।

(ध) एतदनपेक्षः एतस्यां नवपरिणीतायां भार्य्यायाम्, अनपेक्षः उदासीनः, तामनादृत्य इत्यर्थः। अवरोधम् अन्तःपुरिकाम्, उपपत्नीमिति यावत। तामपि गणिकामपि। उपाचरत् असेवत। अनलसा आलस्यविरहिता सती। परिजनं परिवारवर्गम्। दाक्षिण्येन उदारतया, सरलव्यवहारेणेत्यर्थः, ("दक्षिणे सरलोदारौ" इत्यमरः)।

तदायत्तमेव कृत्वा तदेकाधीनजीवितस्त्रिवर्गं निर्विवेश । (न) तद्ब्रवीमि, 'गृहिण्यः प्रियहिताय दारगुणाः' इति ।

अस्ति सौराष्ट्रेषु वलभी नाम्नी नगरी । तस्यां गृहगुप्तनाम्नः महाविभवशालिनः कस्यचिन्नाविकपतेः कन्यां रत्नवतीं नाम मधुमतीनिवासी बलभद्रो नाम कश्चित् सार्थवाहसुतः परिणिनाय । (प) सा तु नवोढासुलभलज्जया पत्युरभिलषितसाधनपराङ्मुखी भर्तृद्वेष्यताम् (फ) अयासीत् । तदारभ्य भर्त्ता तां कथमपि द्रष्टुं न इयेष । (ब) ततश्च सर्वे तां दुर्भगां 'नेयं रत्नवती निम्बवती' इति समाख्याय आजुहुवुः । (भ)

गते च कस्मिंश्चित् काले सा तु नितरां तप्यमाना गत्यन्तरमपश्यन्ती कामपि प्रव्राजिकां शरणमापन्ना (म) रुदती सकरुणं प्राह, 'मातः ! किञ्चिदस्मि वक्तुकामा, मत्तो दुर्भगा काऽपि नास्ति भूतले । दौर्भाग्यं हि जीवन्मरणमङ्गनानां विशेषतः कुलवधूनाम् । मातृप्रमुखो बन्धुवर्गोऽपि मां सावज्ञं पश्यति, तत् यथाऽहं पत्युरनुग्राह्या (य) भवेयं तथा उपायः क्रियतां भवत्या, नो चेत् त्यक्ष्यामि

---

(न) कुटुम्बं परिजनम् । तदायत्तम् तस्याः परिणीतभार्य्यायाः, आयत्तम् अधीनम् । त्रिवर्गं धर्मकामार्थान्, ("त्रिवर्गो धर्मकामार्थैः" इत्यमरः) । निर्विवेश बुभुजे. ("निर्वेशो भृतिभोगयोः" इत्यमरः) ।

(प) सार्थवाहसुतः वणिक्पुत्रः । परिणिनाय उद्वाह ।

(फ) सा रत्नवती । नवोढेति ।—नवोढायाः सद्यःपरिणीतायाः, सुलभा स्वाभाविकी, या लज्जा त्रपा तया । भर्तृद्वेष्यतां पत्युर्विरागभाजनम् ।

(ब) इयेष अभिललाष ।

(भ) दुर्भगां दुर्भागिनीं, पत्युरप्रियामित्यर्थः । समाख्याय उक्त्वा । "समाख्यया" इति पाठे—नाम्ना इत्यर्थः । आजुहुवुः आचक्रुः, आहूतवन्तः इत्यर्थः ।

(म) तप्यमाना खिद्यमाना । गत्यन्तरम् उपायान्तरम् । प्रव्राजिकां सन्न्यासिनीम् । शरणम् आश्रयम् । आपन्ना प्राप्ता ।

(य) मत्तः मत्तः, मदपेक्ष्य इत्यर्थः । दौर्भाग्यं पत्युरप्रियत्वम् । अनुग्राह्या प्रसादभागिनी ।

निष्प्रयोजनान् प्राणान्' इति । सा तु सकरुणा तामुवा
मा साहसम् (र) अवलम्बस्व, यदि कश्चिदुपायस्ते मनसि वर्त्तते
अहं तदनुसारेण यते, बुद्धिमती असि' इति । अथासौ
ध्यात्वा अब्रवीत्, 'भगवति ! अस्ति अस्मत्प्रतिवेशिन:
धनिन: कनकवती नाम कन्या मत्समानरूपावयवा मम
तया सह तदीयहर्म्यतले ततोऽपि द्विगुणमण्डिता (ल) विह
त्वया तु तन्मातुः प्रार्थनं सकरुणमभिधाय पतिरेतद्गृहं कथ
आनीतश्च तं प्रति अहं तथा अभिलाषं दर्शयिष्यामि
कनकवतीमेव मां मन्यमानो महासक्तिञ्च (व) जानन् गृहं प्रति
ततस्त्वया यथाऽसौ (श) मां कनकवतीमेव विदित्वा देशान्त
तथाऽप्युपाय: करणीय:' इति ।

सा तु धूर्त्ता तथैव सर्वं सम्पादितवती । अथासौ
तां रत्नाऽऽभरणपरिच्छदामादाय निशि पलाय्य प्रावसत् । (प
तु प्रव्राजिका वार्त्तामघोषयत् 'मन्देन मया निर्निमित्तम्
रत्नवती, श्वशुरौ च परिभूतौ, तदत्रैव पुन: संसर्गं जि
पूर्वेद्युर्मामकथयत् बलभद्र:, नूनम् (स) असौ रत्नवती तेन नीत

(र) साहसम् अविमृश्यकारितां, प्राणत्यागाध्यवसायमित्यर्थ: ।

(ल) ध्यात्वा चिन्तयित्वा । असौ रत्नवती । तदीयहर्म्यतले कनकवत्य उपरि । ततोऽपि कनकवत्या अपि । द्विगुणमण्डिता द्विगुणालङ्कारेणालङ्कृता

(व) तदिति ।—तस्या: कनकवत्या:, मातु: जनन्या:, प्रार्थ स्वगृहागमनाय प्रार्थनामित्यर्थ: । एतद्गृहं कनकवत्या: भवनम् । कथञ्च प्रकारेण । महासक्तिं मम अनुरागम् ।

(श) असौ मत्पति: । (ष) तां रत्नवतीम् । सेति ।—रत्नाभरणेन रेण, परिच्छदेन वस्त्रादिना च सह वर्त्तमानां, बहुमूल्यवसनभूषणादिभि: प्रावसत् प्रवासमगच्छत ।

(स) वार्त्तां वृत्तान्तं, वक्ष्यमाणं संवादमित्यर्थ: । अघोषयत् प्रचारितवतीत्यर्थ: । मन्देन मूढेन. ("मूढाल्पापटुनिर्भाग्या: मन्दा: स्यु:" इ मया बलभद्रेण । निर्निमित्तम् अकारणम् । उपेक्षिता अनादृता ।

ततोऽसौ बलभद्रः खेटकपुरं गत्वा तत्र वाणिज्यकौशलेन बहूनि धनानि उपार्ज्य प्राधान्यमगात् । क्रमेण कयाचिद्दास्या कारणेन केनापि रोषितया निर्भिन्नं रहस्यम् (ङ) 'अयं बलभद्रः निधिपतिदत्तस्य कन्यां कनकवतीमपहृत्य अत्रैव वसति' इति । ततो राज्ञा तस्य सर्वस्वहरणे दण्डे आज्ञप्ते भीतं बलभद्रमेकान्ते प्राह रत्नवती, 'नाथ ! न भेतव्यं, ब्रूहि, 'नेयं कनकवती, परं मया न्यायोढ़ा रत्नवती गृहगुप्तदुहिता ; न चेत् प्रतीथ प्रणिधिं प्रहिणुत अस्या बन्धुपार्श्वम्' (च) इति ।' अथ तद्बन्धुवर्गः समागतस्तां दुहितरं जामात्रा सह हृष्टः स्वपुरं प्रत्यनैषीत् । ततो रत्नवतीं कनकवतीं भावयतस्तस्य सा अतिप्रिया आसीत् । तत् ब्रवीमि, 'कामो नाम सङ्कल्पः' इति' ।

तदनन्तरमसौ नितम्बवतीवृत्तान्तमपृच्छत् । अहमब्रवम्, 'अस्ति मथुरा नाम्नी पुरी, तस्यां कोऽपि कलहकण्टको नाम वणिक्पुत्रः कलासु गणिकासु चातिसक्तः (ख) प्रतिवसति स्म । एकदाऽसौ एकं चित्रपटं कस्यापि हस्ते ददर्श । तत्र काचिदालिखिता युवतिरस्य कामार्त्तं मनश्चकार । अब्रवीच्च तं, 'विरुद्धमिवैतत् दृश्यते, यतः कुलजादुर्लभं वपुः, आभिजात्यशंसिनी च नम्रता, पाण्डुरा च मुखच्छविः ; न चैषा प्रोषितभर्तृका, प्रवासचिह्नस्य वेण्यादेः (ग) अदर्शनात् ; तदियं

श्वशुरस्य । परिभूतौ अवज्ञातौ । अत्रैव अस्मिन् स्थाने एव, निजगृहे एवेत्यर्थः । संसर्गे मिलने, रत्नवत्या सह एकत्रावस्थाने इत्यर्थः । जिह्रेमि लज्जे । पूर्वेद्युः पूर्वदिने । तेन बलभद्रेण । नूनं निश्चितम् ।

(ङ) रोषितया कोपितया, बलभद्रेणेति शेषः, बलभद्रकृततिरस्कारेण क्रुद्धया इत्यर्थः । निर्भिन्नं प्रकाशितम् । रहस्यं गोप्यविषयम् ।

(च) आज्ञप्ते आदिष्टे । एकान्ते निर्जने । न्यायोढ़ा यथाविधि विवाहिता । प्रतीथ विश्वसिथ, विश्वासं कुरुथ इत्यर्थः । प्रणिधिं चरम् । प्रहिणुत प्रेरयत । अस्याः रत्नवत्याः । बन्धुपार्श्वं पित्रादिस्वजनसमीपम् ।

(ख) अतिसक्तः अत्यन्तमनुरक्तः ।

(ग) कुलजादुर्लभं कुलजाभिः सत्कुलोद्भवाभिः कुलजाभिर्वा, दुर्लभं दुष्प्रापम्, अतिरमणीयमिति भावः । आभिजात्यशंसिनी सत्कुलोद्भवत्वसूचिका । पाण्डुरा

वृद्धस्य कस्यचित् नातिपुंस्त्वस्य यथाऽर्हसम्भोगालाभपीड़िता (घ) गृहिणी भवितुमर्हति' इति। चित्रपटधारी प्राह, 'सत्यमुपलक्षितम्, एषा अवन्तिपुर्य्यामनन्तकीर्त्तिनाम्नः सार्थवाहस्य वनिता यथार्थनाम्नी (ङ) नितम्बवती नाम। सौन्दर्य्यविस्मितेन मया आलिखिता' इति।

स तु कलहकण्टको नाम तदाकर्ण्यैव जगामोज्जयिनीम्। तत्र दैवज्ञो नाम भूत्वा भिक्षाभिषेण तद्गृहं गत्वा तामवलोक्य नितरां मन्मथवशंवदः पौरमुख्येभ्यः (च) तत्रत्यश्मशानरक्षामयाचत अलभत च। क्रमेण च कामपि श्रमणिकां (छ) वशीकृत्य दूतिकाकार्य्यार्थं शिक्षयित्वा नितम्बवतीसकाशं प्राहिणोत्। सा तु धूर्त्ता 'पुत्रवती भव' इति तामाशिषा संवर्द्ध्य विविधालापमकरोत्। ततश्चान्येद्युः पुनरागत्य प्राब्रवीत् 'वत्से! भर्त्ता तव पाण्डुरोगग्रस्तः शयने भोगे चासमर्थः, मम चाशीर्वादोऽवितथः, न च शक्यं तस्य विघ्नमप्रतिकृत्यापत्यमस्मात् (ज) लब्धुम्। तत् प्रसीद, निशि मदुपजी-

---

पाण्डुवर्णा, पीतभागार्द्धकेतकीपरागसन्निभा इत्यर्थः, श्वेतपीतमिश्रवर्णा इति यावत, रक्तहीनेति भावः, ("हरिणः पाण्डुरः पाण्डु" इत्यमरः। "पाण्डुस्तु पीतभागार्द्धकेतकीधूलिसन्निभः" इति शब्दार्णवः)। मुखच्छविः वदनकान्तिः। प्रोषितभर्त्तृका विदेशस्थपतिका। प्रवासचिह्नस्य विदेशस्थपतिकालक्षणस्य। वेण्यादेः केशबन्धनस्य, एकवेणीधरत्वादिरूपस्येति भावः, आदिपदेन शरीरासंस्कारादेर्ग्रहणम; ("वेणी कचस्य बन्धे स्यात नदीनां सङ्गमेऽपि च" इति विश्वः)।

(घ) नातिपुंस्त्वस्य नातिपुरुषत्वस्य, अल्पसम्भोगशक्तिकस्य इत्यर्थः। यथार्हेति।— यथार्हः यथोचितः, स्वताक्षण्यानुरूप इति यावत, यः सम्भोगः कामोपभोगः, तस्य अलाभेन अप्राप्त्या, पीडिता दुःखिता।

(ङ) उपलक्षितम अनुमितमित्यर्थः। यथार्थनाम्नी सार्थकनामा, विशालनितम्बत्वादिति भावः।

(च) नाम इति अलीके, कपटेन दैवज्ञो भूत्वेत्यर्थः। भिक्षाभिषेण भिक्षाच्छलेन। पौरमुख्येभ्यः पुरवासिषु श्रेष्ठेभ्यः।

(छ) श्रमणिकां बौद्धसन्न्यासिनीम।

(ज) भोगे वनितासम्भोगे। आशीर्वादः "पुत्रवती भव" इत्येवंरूपाशीर्वचनम्। अवितथः सत्यः। अप्रतिकृत्य प्रतिकारमकृत्वा। अस्मात् वृद्धस्वामिनः इत्यर्थः।

तस्य कस्यचिन्मन्त्रवादिनः (झ) करे चरणमर्पयित्वा तदभिमन्त्रितेन चरणेन प्रणयकुपिता नाम भूत्वा भर्त्तारमुरसि प्रहर्त्तुमर्हसि, ततोऽसौ भर्त्ता नीरोगोऽपत्योत्पादनक्षमो भविता ; नात्र शङ्का कार्य्या' इति। सा तु सरला तद्वचसि विश्वस्ता निशायां तया उपनीतस्य तस्य कलहकण्टकस्य हस्ते यावत् स्वचरणं न्यस्यति, तावदेव स धूर्त्तस्तद्गुल्फमूले छुरिकया किमप्यालिख्य नूपुरमेकं चरणादाक्षिप्य (ञ) द्रुतम् अपासरत्।

सा तु सत्रासा स्वमेव दुर्नयं गर्हमाणा तं व्रणं पटबन्धनेनाच्छाद्य आमयापदेशेन (ट) त्रिचतुराणि दिनानि शयनपरा अतिष्ठत्। स तु धूर्त्तः 'विक्रेष्ये' इति तेन नूपुरेण तमनन्तकीर्त्तिम् (ठ) आससाद। स दृष्ट्वैव 'मद्गृहिण्या एष नूपुरः कथं त्वयोपलब्धः?' इति तमपृच्छत्। स तु निर्बन्धपृच्छयाऽपि यदा न किञ्चित् अब्रवीत् तदाऽसौ वणिक् "स्वनूपुरयुगलं प्रेषय' इति गृहिणीं सन्दिदेश। (ड) सा तु सलज्जं सत्रासञ्च 'अद्य रात्रौ क्वापि स्खलितः (ढ) अन्विष्टोऽपि नाधिगत एकः, अयं पुनरपरः' इति द्वितीयं प्राहिणोत्। अथ समवेतेषु वणिग्वर्गेषु स धूर्त्तः पुनः पुनरनुयुक्तः (ण) सविनयमवादीत्, 'विदितमेव भवतां यथाऽहं श्मशानरक्षणे नियुक्तः तदुपजीवी तिष्ठामि, धूर्त्ताश्च कदाचिन्मद्दर्शनभीरवः निशि दहेयुरपि शवानीति निशास्वपि श्मशानमधिशये। पूर्वेद्युर्निशि कामपि दग्धादग्धं (त) शवमाकर्षन्तीं चितायां नारीमालोक-

(झ) मन्त्रवादिनः मन्त्रप्रभावम उद्घोषणशीलस्य।

(ञ) सा नितम्बवती। विश्वस्ता सञ्जातविश्वासा। तया श्रमणिकया। न्यस्यति स्थापयति। आक्षिप्य आकृष्य।

(ट) स्वमेव निजमेव, आत्मकृतमेवेत्यर्थः। दुर्नयं दुश्चेष्टितम्, न्यायविगर्हिताचरणमित्यर्थः। गर्हमाणा निन्दन्ती। व्रणं छुरिकाकृतं क्षतम्। पटबन्धनेन वस्त्रबन्धनेन, वस्त्रखण्डेन बद्ध्वा इत्यर्थः। आमयापदेशेन रोगच्छलेन।

(ठ) सः कलहकण्टकः। अनन्तकीर्त्तिं नितम्बवत्याः भर्त्तारम्।

(ड) निर्बन्धपृच्छया अत्याग्रहेण जिज्ञासया। सन्दिदेश आज्ञापयामास।

(ढ) स्खलितः भ्रष्टः, पदात् पतित इत्यर्थः। (ण) अनुयुक्तः पृष्टः।

(त) दग्धादग्धं किञ्चिद्दग्धं किञ्चिददग्धम्, अर्द्धदग्धमित्यर्थः।

यम्। अर्थलोभात् साहसमवलम्ब्य सा मया गृहीत्वा शस्त्रिकया (थ) चोरुमूले किञ्चिदालिख्य नूपुरमेकं पदादाच्छिद्य च मुक्ता पलायिष्ट। एष तावदस्यागमः, (द) परं भवन्तः प्रमाणम्' इति।

ततो विमर्शेण तस्याः शाकिनीत्वं (ध) पौरैर्निश्चितम्। भर्त्रा च सा परित्यक्ता तस्मिन्नेव श्मशाने बहु विलप्य मर्त्तुकामा तेन धूर्त्तेन नक्तं (न) पादयोर्निपत्य अनुनीता अग्रया तत्प्राणवल्लभा आसीत्। तदुक्तं 'दुष्करसाधनं प्रज्ञा' इति'।

एतदाकर्ण्य ब्रह्मराक्षसो मामपूजयत्। तस्मिन्नेव क्षणे सहसा अम्बरतलात् मुक्ताफलस्थूलाः सलिलबिन्दवोऽपतन्। अहन्तु 'किमिदम्?' इति उच्चक्षुः (प) आलोकयं कमपि राक्षसं काममप्यङ्गनामाकर्षन्तम्। 'कथमयमकामामनाचारो हरति!' इति गगनगमनमन्दशक्तौ अशस्त्रे च मयि तप्यमाने (फ) स तु ब्रह्मराक्षसः 'तिष्ठ रे पाप! क्वापहरसि?' इति भर्त्सयन् उत्पत्य तेन राक्षसेन समसृज्यत। तान्तु रोषादनपेक्षापविद्धाम् (ब) अन्तरीक्षादापतन्तीमहमुन्मुखः प्रसारितोभयकरः अग्रहीषम्। गृहीत्वा च वेपमानां सम्मीलिताक्षीं मदङ्गस्पर्शेनोद्भिन्नरोमाञ्चां ताम् अनवतारयन्नेव निर्वर्ण्य (भ) मत्प्राणवल्लभां राजकन्यां

---

(थ) शस्त्रिकया छुरिकया, ("स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका" इत्यमरः)।

(द) अस्य नूपुरस्य। आगमः प्राप्तिविवरणमित्यर्थः।

(ध) विमर्शेन विचारेण। तस्याः नितम्बवत्याः। शाकिनीत्वं कालिकायाः सहचरीविशेषत्वम्।

(न) नक्तं रात्रौ। (प) उच्चक्षुः ऊर्ध्वीकृतदृष्टिः।

(फ) अकामां निरभिलाषाम्, अननुरक्तामित्यर्थः। अनाचारः सद्व्यवहारविवर्जितः। गगनेति।—गगनगमने आकाशमार्गे उत्पतने, मन्दा पाटवहीना, शक्तिः सामर्थ्यं यस्य तथाभूते। तप्यमाने पीड्यमाने।

(ब) ताम् अपाङ्गयमानामङ्गनाम्। अनपेक्षापविद्धाम् अनपेक्षया औदासीन्येन, ब्रह्मराक्षसेन सह युद्धापस्थितेरिति भावः, अपविद्धां परित्यक्ताम्।

(भ) वेपमानां कम्पमानाम्। सम्मीलिताक्षीं मुद्रितनेत्राम्। अनवतारयन्नेव भूमौ अस्थापयन्नेव। निर्वर्ण्य दृष्ट्वा।

कन्दुकवतीमिवालक्षयम् । तावत् तावपि राक्षसब्रह्मराक्षसौ परस्परं सम्प्रहारेणाक्षपयेताम् । (म) अहन्तु तां पुलिने (य) समवरोप्य समाश्वास्य अपृच्छं, 'किमिदम् ?' इति । सा तु तिर्य्यङ्मामभिवीक्ष्य जातप्रत्यभिज्ञा सकरुणमरोदीत्, अब्रवीच, 'नाथ ! त्वद्दर्शनादुपोढ़रागा (र) अहं चन्द्रसेनया त्वत्कथाभिरेव समाश्वासितास्मि । अत्रान्तरे (ल) पापेन मन्नाता त्वां समुद्रे मज्जितं श्रुत्वा सखीजनं परिजनञ्च वञ्चयित्वा जीवितं त्यक्तुकामा एकाकिनी क्रीड़ावनमुपागमम् । तत्र मामसौ पापः अचकमत । (व) ततः सोऽयं मया भीतयाऽवधूतप्रार्थनः मां स्फुरन्तीं गृहीत्वा गगनमुदपतत्, अभवच्च साम्प्रतमवसितः । (श) अहञ्च दैवात् तवैव जीवितेशस्य हस्ते पतिता' इति ।

एतदाकर्ण्य तया सह नावमध्यारोहम् । मुक्ता च नौः प्रतिवातं नीयमाना तमेव दामलिप्तं प्रत्युपातिष्ठत, अवतीर्णाश्च वयमग्रमेण । 'तनयस्य तनयायाश्च नाशात् तुङ्गधन्वा सकलत्र एव गङ्गारोधसि अनशनेनोपरन्तुं प्रतिष्ठते, सह तेन मर्तुमिच्छति अनुरक्तः पौरजनः' इति अश्रुमुखीणां प्रजानामाक्रन्दं (ष) श्रुतवान् अहं सत्वरं समेत्य असै राज्ञे यथावृत्तमाख्याय तदपत्यद्वयं समार्पयम् । प्रीतेन तेन जामाता कृतोऽस्मि । तत्पुत्रश्च मदनुजीवी जातः, चन्द्रसेना च निर्बाधं कोशदासमभजत । ततश्च सिंहवर्मसाहाय्यार्थमागत्य भर्तुस्ते दर्शनसुखमनुभवामि" इति ।

---

(म) अक्षपयेताम् अनाशयेताम् ।

(य) पुलिने सरोवरतीरे इत्यर्थः ।

(र) सा कन्दुकवती । तिर्य्यक् वक्रभावेन, अपाङ्गवीक्षणेनेत्यर्थः । जातप्रत्यभिज्ञा अनुतमत्परिचया, मां परिचिन्वतीत्यर्थः । उपोढ़रागा सञ्जातानुरागा ।

(ल) अत्रान्तरे अस्मिन्नवकाशे । (व) असौ राक्षसः । अचकमत प्रार्थितवान् ।

(श) अवधूतेति ।—अवधूता अवज्ञाता, प्रार्थना याच्ञा यस्य तादृशः । स्फुरन्तीं कम्पमानाम् । अवसितः विनष्टः ।

(ष) गङ्गारोधसि जाह्नवीतटे । अनशनेन उपवासेन । उपरन्तुं मर्त्तुम् । आक्रन्दं क्रन्दनम् ।

श्रुत्वा राजवाहनः "चित्रं दैवगतिः, पुष्कलः पुरुषकारः" (स) इति तमभिनन्द्य मन्त्रगुप्ते हर्षोत्फुल्लं चक्षुः पातयामास ।

इति षष्ठोच्छ्वासः ।

## अथ सप्तमोच्छ्वासः ।

## मन्त्रगुप्तचरितम् ।

सोऽब्रवीत्, "देव! नगररन्ध्रगतस्य (क) ते गतिं ज्ञास्यन् कदाचिदहं गतः कलिङ्गनगरम् । तत्र श्मशानसन्निकृष्टस्य कस्यचित्तरोः किसलयसम्भृते (ख) तले स्थित्वा निद्रामभजे । निशीथे शीतवातस्पर्शात् गतनिद्रः 'कथं खलेनानेन दग्धसिद्धेन रिरंसाकाले निदेशं दित्सता जन एष रागाविष्ट इत्थं विवशीकृतः, अपि क्रियेत केनचिच्छक्तिमता अस्य सिद्धेरन्तरायः?' (ग) इति किङ्करस्य कातरं विलपितमाकर्ण्य 'क एष सिद्धः? का च सिद्धिः? किञ्च किङ्करेण करिष्यति?' इति दिदृक्षुः तद्गतया दिशा किञ्चित् सविधवर्ती नरास्थिशकलरचितालङ्कारं भस्मकृताङ्गरागं जटिलं हिरण्यरेतसि तिलसिद्धार्थादीन् विकिरन्तं (घ)

---

(स) चित्रा आश्चर्यम् । पुष्कलः मनोरमः, कार्यसाधकत्वात् समादरेण आश्रयणीय इति भावः । पुरुषकारः पौरुषः ।

---

(क) नगररन्ध्रगतस्य पर्वतविवरं प्रविष्टस्य । (ख) किसलयसम्भृते नवपल्लवास्तृते ।

(ग) खलेन दुर्जनेन । दग्धसिद्धेन भस्मवत् तुच्छतापसेनेत्यर्थः, तापसाधमेनेति यावत् । रिरंसाकाले रमणेच्छायामुपस्थितौ । निदेशम् आज्ञाम् । दित्सता दातुमिच्छता, कुर्वता इत्यर्थः । जन एष भद्रोऽयं जनः । रागाविष्टः कान्ताऽनुरागेण विवशीकृतः, अनुरागविह्वल इत्यर्थः । इत्थम् अनेन प्रकारेण, रिरंसाकालेऽपि विघ्नोत्पादनेनेत्यर्थः । अपि सम्भावनायाम् । सिद्धेः साफल्यलाभस्य । अन्तरायः विघ्नः ।

(घ) तद्गतया दिशा यत्र किङ्करविलपितमाकर्णितं तस्यां दिशि इत्यर्थः ।

श्रीम् । तस्याग्रे कोऽपि किङ्करः तिष्ठति । सोऽनेन निकृष्टाऽऽश-
ष्टः (ङ) 'गच्छ, कलिङ्गराजस्य कर्दनस्य कन्यां कनकलेखां नाम
इहादिहानय' इति । तेन च तत्क्षणादानीतां त्रासकम्पित-
'हा तात! हा मातः!' इति क्रन्दन्तीं केशेषु गृहीत्वा
कर्त्तितुमचेष्टत । अहन्तु झटिति तस्य हस्तात् तमसि-
तेन तस्य शिरश्छित्त्वा कस्यचित् सालतरोः स्कन्धे न्यधिषि । (च)
द्य स किङ्करः प्रहृष्टः प्रोवाच, 'आर्य्य! अनार्य्यस्यास्य पार-
अद्य मोचितोऽस्मि कल्याणिना, साधु कृतं यदेषः पापः
नेकेतनं नीतः ; तदत्र दयानिधेर्भवतः काञ्चिदाज्ञां चिकीर्षति
:, आदिशतु भवान्' इति प्राशंसीत् । (छ) आदिशञ्च तं,
इयमक्लेशार्हा राजनन्दिनी अनेन दुराचारेण अत्यर्थं क्लेशिता,
स्वनिलयं, नान्यदितः (ज)किञ्चिन्मे प्रियमस्ति' इति ।
कर्णं सा चञ्चलतारकां दृशं तिर्य्यक् सञ्चारयन्ती रागलज्जा-

---

समीपस्थः, किञ्चित समीपं गत्वा इत्यर्थः, अद्राक्षमिति शेषः । नरेति ।—
मानवानाम, अस्थिशकलैः कङ्कालखण्डैः, रचितः कल्पितः, अलङ्कारः
मा यस्य वा तादृशम । भस्मेति ।—भस्मना भूत्वा, कृतः सम्पादितः, अङ्गरागः
शेन तादृशम । जटिलं जटाधारिणम । ङ्कितयाहेतमि अग्नौ ।
—तिलाश्च सिद्धार्थाः श्वेतसर्षपाश्च आदयो येषां तान्, होमीयद्रव्यविशेषा-
वकिरन्तं प्रक्षिपन्तम ।

निकृष्टाशयेन नीचाभिप्रायेण । आदिष्टः आज्ञप्तः ।

आच्छिद्य आकृष्य । तेन असिना । तस्य किङ्करस्य । स्कन्धे काण्डदेशे ।
ापितवान् ।

नार्य्यस्य असाधोः । पारतन्त्र्यात् पारवश्यात, अधीनतापाशादित्यर्थः ।
मङ्गलालयेन, भवतेति शेषः । कीनाशेति ।—कीनाशस्य यमस्य,
नाशनामानः कदर्य्यः कर्षको यमः" इति शाश्वतः) निकेतनं भवनम् ।
शंसां कृतवान् ।

अक्लेशार्हा क्लेशभोगायोग्या, सुकुमाराङ्गीति भावः । स्वनिलयं
। इतः अस्मादधिकम् ।

ऽन्तरवर्त्तिनी किमपि मन्दमधुरमभाषत, 'आर्य्य ! किमर्थमिमं जनं कालहस्तादाक्षिप्य रणरणिकावाहिनि अनङ्गरागसागरे निक्षिपसि ? यद्यस्ति दया अस्मिन् जने, तदा त्वया अनन्यसाधारणः (झ) क्रियतामयं जनश्चरणसेवायाम् । यदि च कन्यापुरे रहस्यभेदादनर्थं आशङ्कते, तदपि नास्ति, रक्ततरा हि नः (ञ) सख्यः यथा न कश्चिदेतत् ज्ञास्यति तथा यतिष्यन्ते' इति । अहञ्च तद्दर्शनेन नितरां रागपूर्णस्तं किङ्करमगादिषम्, "इयं चार्वङ्गी यथा कथयति तथा चेन्नाचरेयं नयेत मदनः क्षणेन अन्त्यां दशां, तत् सहानया हरिणाक्ष्या (ट) जनमिमं कन्यकागारं नय' इति । नीतश्चाहं तेन किङ्करेण राक्षसेन कन्यकापुरं तत्रैकदेशे (ठ) प्रियानिदेशात् क्षणमतिष्ठम् । सा च सर्वाः सखीः निद्रिताः हस्तपरामर्शेन प्रबोध्य सर्वं वृत्तान्तं ताभ्यः कथयित्वा ताभिः प्रणताभिरतिगौरवात् पूज्यमानं मां निजनिकेतनम् (ड) अनैषीत् । ततश्चाहं सखीजनेनातिदक्षिणेन दृढ़तरीकृतस्नेहनिगड़ः तया सङ्गत्य (ढ) सुखेन कालमगमयम् ।

कदाचिन्मधुमासे कलिङ्गनाथः सहाङ्गनाजनेन तनयया सकलेन च पौरजनेन त्रयोदशदिनानि सागरतीरकानने क्रीड़ारसेन कालं नयन् अन्ध्रनाथेन जयसिंहेन रन्ध्रान्वेषिणा अनेकबलसमेतेन द्रागा-

---

(झ) रागेति ।—रागलज्जयोः अनुरागत्रपयोः, अन्तरवर्त्तिनी मध्यस्थिता, अनुरक्ता लज्जिता च सतीत्यर्थः । इम जनं मादृशं जनम । कालहस्तात् यमोपमसिद्धकवलादित्यर्थः । रणरणिकावाहिनि उत्कण्ठारूपप्रवाहवति । अनङ्गरागसागरे कामावेशजनितानुरागार्णवे ।

(ञ) रहस्यभेदात गुह्यविषयप्रकाशात् । अनर्थः विपत्तिः । रक्ततरा अत्यर्थमनुरागिण्यः । नः अस्माकं, ममेत्यर्थः ।

(ट) अन्त्यां दशां चरमावस्थां, मरणमित्यर्थः । हरिणाक्ष्या मृगनयनया ।

(ठ) तत्र कन्यकापुरे । एकदेशे एकस्मिन् अंशे ।

(ड) निजनिकेतनं स्वावासं, निजशयनगृहमित्यर्थः ।

(ढ) अतिदक्षिणेन अतिसरलेन, अत्युदारेण वा, ("दक्षिणे सरलोदारौ" इत्यमरः) । दृढ़ेति ।—दृढ़तरीकृतः अत्यर्थं प्रगाढ़ीकृतः, स्नेहः प्रेम एव, निगड़ः शृङ्खलः यस्य तथाभूतः, अतिप्रगाढ़प्रणयशृङ्खलाबद्ध इत्यर्थः । सङ्गत्य मिलित्वा ।

गत्यागच्छत सकलत्रः। (ण) सा च प्रिया मे सह सखीजनेनानीयत (त) तं देशम्। अहन्तु तां प्रियां चिन्तयन् किंकर्त्तव्यविमूढोऽतर्कयं, 'गता सा कलिङ्गराजकन्या पितृभ्यां सहारिहस्तं, निरस्तधैर्य्यः स राजा नियतं तां सञ्जिघृक्षेत्, तदसहा च सा सती गररसादिना सद्यः सन्तिष्ठेत, तस्याञ्च मृतायाम् अयं जनो हन्येत कामेन, काऽत्र गतिः?' (थ) इति।

अत्रान्तरे अन्ध्रदेशात् कश्चिदग्रजन्मा (द) समायातः। तन्मुखात् श्रुतं 'जयसिंहेन जिघांसितः (ध) स कर्दनः कनकलेखादर्शनजेन रागेणैव अरक्ष्यत। सा च राजदारिका यक्षेण केनचिदाविष्टा (न) न तिष्ठति कस्याप्यग्रे नरस्य। जयसिंहश्च तन्निराकरणार्थं नानाचिकित्सकादि-सङ्ग्रहेण आयस्यति, न चास्ति सिद्धिः' (प) इति।

अहन्तु तदाकर्ण्य सञ्जातप्रत्याशः जटाचीरकन्याधरः सन्यासी भूत्वा कांश्चित् शिष्यानग्रहीषम्, अकार्षञ्च तान् नानाऽऽश्चर्य्यक्रियाविप्र-लब्धात् जनादाहृतान्नवस्त्रादिदानेन अत्यन्तानुरक्तान्; अयासिषञ्च (फ)

---

(ण) मधुमासे चैत्रमासे, वसन्तकाले इति यावत्। रन्ध्रान्वेषिणा छिद्रानुसन्धा-यिना, कलिङ्गनाथस्य अनवधानतारूपमवसरमनुसन्दधता इत्यर्थः। अन्ध्रनाथेन अन्ध्रदेशाधिपेन। अनेकबलसमेतेन बहुसैन्ययुक्तेन। द्राक् झटिति, अतर्कितभावे-नेत्यर्थः। सकलत्रः सस्त्रीकः, सपरिजन इति भावः।

(त) अनीयत नीता। (थ) पितृभ्यां मातापितृभ्याम्। सञ्जिघृक्षेत सङ्ग्रहीतु-मिच्छेत, अवश्यमेव आत्माधीनीकर्त्तुं यतिष्यते इति भावः। तदसहा तदक्षमा। गरेति।—गरः उपविषं कृत्रिमविषं वा, ("गरो खरायां करणे क्लीवं नोपविषे विषे" इति मेदिनी) रसः विषं, तदादिना, ("शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इत्यमरः)। सद्यः तत्क्षणे एव। सन्तिष्ठेत म्रियेत। गतिः उपायः।

(द) अत्रान्तरे अस्मिन्नवकाशे। अग्रजन्मा ब्राह्मणः।

(ध) जिघांसितः हन्तुमिष्टः।

(न) सा कनकलेखा। राजदारिका राजसुता। आविष्टा आक्रान्ता, अधि-ष्ठिता इत्यर्थः।

(प) तन्निराकरणार्थं यक्षावेशदूरीकरणार्थम्। आयस्यति प्रयतते, क्लिश्यति इत्यर्थो वा। सिद्धिः साफल्यम्।

(फ) जटेति।—जटा, चीरं वस्त्रखण्डं. कौपीनमित्यर्थः [illegible]

अन्धनगरम् । तत्र कश्चित् महासरस्तीरकानने कृताश्रमः शिष्य-वर्गैरित्थमकीर्त्त्यं दिशि दिशि 'य एष यतिः सरस्तीरे स्थण्डिलशायी तिष्ठति, तस्य सर्वाणि सरहस्यानि सषडङ्गानि छन्दांसि रसनाग्र-वर्त्तीनि अन्यानि च शास्त्राणि, यस्य यत् ज्ञातुमिच्छा स्यात् स तत्सकाशात् तस्य निर्णयं करोतु, अस्य नालीकं किञ्चिदपि, मूर्त्तिमान् दयाराशिरयम्, अस्य चरणरजसा शिरसि स्पृष्टस्य चिकित्सकैरप्रतिकार्य्यस्य व्याधेरुपशमः स्यात्, न तस्य शक्तेः शक्य-मियत्ताज्ञानम्' (ब) इति ।

इयञ्च वार्त्ता कर्णपरम्परया तस्य राज्ञो जयसिंहस्य श्रुतिपथम् (भ) अगात् । स च अहरहरागत्य आदरातिशयेन शिष्यान् मे सन्तोष्य तन्मुखेन काङ्क्षितार्थसाधनाय (म) मामयाचत । अहन्तु ध्यानधीरः सहेलं निरीक्ष्यैनमकथयं, 'तात ! स्थाने एष हि यत्नः, तस्य कन्या-रत्नस्य सर्वलक्षणसमेतस्याधिगतिः ससागरायाः पृथिव्याः आसादानाय साधनं, न च स यक्षः तदधिष्ठायी केनचिन्नरेन्द्रेण प्रतिकर्त्तुं (य) शक्यः ।

---

तादृशः । नानेति ।—नाना: विविधाः, आश्चर्यक्रियाः विस्मयजनककर्मानुष्ठानानि, ताभिः विप्रलब्धात प्रतारितात् । अयासिषम् अगमम् ।

(ब) कृताश्रमः रचितपर्णकुटीरः इत्यर्थः । इत्थं वक्ष्यमाणप्रकारम् । अकीर्त्त्यं प्रचर्य्यं, प्रचारितोऽभवमित्यर्थः । यतिः सन्यासी । स्थण्डिलशायी व्रतवशात् अनाच्छादितभूमौ शयिता । सरहस्यानि सगोपनीयानि, निगूढतात्पर्य्यसहिता-नीत्यर्थः, सोपनिषन्दि इति यावत, ("रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवत्" इति मेदिनी) । सषडङ्गानि षड्भिः शिक्षाकल्पव्याकरणनिरुक्तछन्दोज्योतिषा-त्मकैः, अङ्गैः अवयवैः सहितानि । छन्दांसि चत्वारो वेदाः । अलीकं मिथ्या । चरणरजसा पदधूल्या । अप्रतिकार्य्यस्य अनिवार्य्यस्य । इयत्ताज्ञानं परिमाणनिर्णयः, सीमानिर्देशः इत्यर्थः ।

(भ) वार्त्ता लोकवादः । श्रुतिपथं कर्णगोचरम् ।

(म) अहरहः प्रतिदिनम् । तन्मुखेन शिष्यद्वारा इत्यर्थः । काङ्क्षितार्थसाधनाय अभिलषितप्रयोजनसम्पादनाय ।

(य) ध्यानधीरः समाधिनिश्चलः । सहेलं सावज्ञम, औदासीन्यमवलम्ब्य इति

[illegible]

तदल सहस्र लौणि अहानि यैरहं यतिष्येऽस्य अर्थस्य (र) साधनाय' इति। तथाऽऽदिष्टे च हृष्टे नृपे गते निशि निशि तमिस्रायां निशीथे तदेकत: सरस्तटं तीर्थसन्निकृष्टं खनित्रेण छिद्रीकृतान्तरालम् (ल) अकार्षम्। कृत्वा च घनशिलाच्छन्नच्छिद्राननं तत्तोरदेशं जनैरशङ्कनीयं प्रात: खनिकेतनं न्यशिश्रियन्। (व)

गते च दिनत्रये स राजा समागत्य कृताऽऽनति: कृताञ्जलिश्च मत्पुरोवर्त्ती मया आदिष्ट:, 'अनुद्योगिनं कदाचित् श्रिय: न संश्रयन्ते, साधीयसा ते सच्चरितेनाकृष्टचेतसा मया सरस्तथा संस्कृतं यथा तेऽद्य सिद्धि: स्यात्; तदद्य निशीथे गाहयित्वैतत् सर: सलिलतले अन्त:सञ्चारिण: वायून् सन्निगृह्य शयानेन जलसङ्घातस्याऽऽरटितं (श) क्षणात् जनिष्यमाणं श्रोतव्यम्। तत: शान्ते तद्रटिते क्लिन्नगात्र: किञ्चिदारक्तनयन: येन आकारेण निर्यास्यसि, तमवलोक्य सर्वजना-

समेतस्य निखिलशुभचिह्नसंयुक्तस्य। अधिगति: प्राप्ति:। आसादनाय प्राप्तेत्र। साधनम् उपाय:। तदधिष्ठात्री तस्यां कन्यायाम् अधिष्ठाता। नरेन्द्रेण विषवैद्येन, मन्त्रादिना भूताद्यपसारणाभिज्ञेन इति भाव:, ("नरेन्द्रस्तु महीपाले विषवैद्ये च पुंस्ययम्" इति मेदिनी)। प्रतिकर्त्तुम् अपसारयितुम्।

(र) यै: अहोभि:। अर्थस्य तव प्रयोजनस्य।

(ल) तमिस्रायाम् अन्धकारावृतायां रात्रौ। निशीथे अर्द्धरात्रे, ("अर्द्धरात्र-निशीथौ द्वौ" इत्यमर:)। एकत: एकस्यां दिशि। तीर्थसन्निकृष्टं तीर्थस्य जलावतरणस्थानस्य, सन्निकृष्टं समीपम्। "तीर्थासन्निकृष्टम्" इति पाठे—जलावतरण-स्थानस्य किञ्चिद्दूरे इत्यर्थ:। छिद्रीकृतेति।—छिद्रीकृतं विवरीकृतं, कृतगर्त्तमित्यर्थ:, अन्तरालम् अभ्यन्तरं यस्य तादृशम्।

(व) घनेति।—घनया स्थूलया, शिलया प्रस्तरखण्डेन, आच्छन्नम् आवृतं, छिद्राननं गर्त्तमुखं यस्य तादृशम्। अशङ्कनीयम् अतर्कणीयं, सन्देहायोग्यमित्यर्थ:। न्यशिश्रियम् आश्रितवान्, गतवानित्यर्थ:।

(श) अनुद्योगिनं प्रयत्नविरहितम्। श्रिय: सम्पद:। साधीयसा अतिमहता। संस्कृतं शोधितम्। गाहयित्वा प्रविश्य। अन्त:सञ्चारिण: देहमध्ये प्रवहमाणान्, निश्वासोच्छ्वासरूपानिति भाव:। सन्निगृह्य सन्निरुध्य। जलसङ्घातस्य सलिलराशे:। आरटितं शब्द:, आलोडनजनितम् इति भाव:।

नन्दजननं स यत्नः न शक्ष्यति (ष) अग्रतः स्थातुं, कन्यकायाश्च तस्या हृदयं सद्य एव त्वय्यतिसक्तं स्यात्, करतलगतञ्च भूमण्डलं, नात्र संशयः। इच्छसि चेदिमं विधिं नानाशास्त्रवेदिभिरधिकृतैरन्यैश्च छिन्नैः आकलय्य जालिक-शतमानाय्य यथेष्टदृष्टान्तरालं सरः क्रियेत, सैनिकैश्च यथास्थानस्थितैः रक्षा विधेया ; कस्तत् जानाति यच्छिद्रेण (स) अरयश्चिकीर्षन्ति !!' इति। तत् तस्य हृदयहारि जातं, तदधिकृतैश्च तदनुमोदितम्। (ह) स पुनर्मयोक्तः, 'राजन्! अत्र तवाधिकारे चिरं स्थितं, न चैकत्र नः चिरस्थानं युक्तं, तत् कृतकृत्यः (क) पुनर्मां न द्रक्ष्यसि। तव राष्ट्रे यत् अन्नादि आसादितं तस्य किञ्चित् अनुपकृत्य न गन्तव्यं, तच्चाद्य सिद्धम्। (ख) गच्छेदानीं गृहान्, यथासमयमागत्यार्थसिद्धये यतेथाः' इति। स किल कृतज्ञतां दर्शयन् भाविनि मद्विरहे कातर इव गृहानयासीत्। अहञ्च निर्जने निशीथे सरस्तीररन्ध्रनिलीनः ईषच्छिद्रदत्तकर्णोऽतिष्ठम्। स च राजा कृतयथाऽऽदिष्टक्रियः स्थाने स्थाने कृतरक्षाविधानः निःशङ्कं सरःसलिलमगाहत। यथाऽऽदेशं शयानञ्च तत्र सलिलतले तं कन्धरायां दृढं निगृह्य करचरणैस्तथा प्राहरं यथा सद्यः प्राणानजहात्। (ग) आकृष्य च तच्छरीरं

---

(ष) क्लिन्नगात्रः आर्द्रदेहः। तम् आकारम्। शक्ष्यति समर्थो भविष्यति।

(स) इमं विधिं मदुक्तमेतद्विधानम्। नानाशास्त्रवेदिभिः विविधशास्त्रज्ञैः। अधिकृतैः अध्यक्षैः, अमात्यादिभिः राजपुरुषप्रधानैरित्यर्थः। छिन्नैः छिन्नाङ्गिभिरित्यर्थः। आकलय्य विविच्य, सम्मन्त्र्य इत्यर्थः। यथेष्टेति।—यथेष्ट यथेच्छं, दृष्टम् अवलोकितम्, अन्तरालम् अभ्यन्तरदेशो यस्य तादृशम्। छिद्रेण रन्ध्रेण, अनवधानतायाः सुयोगेन इत्यर्थः।

(ह) तत् उक्तरूपं मद्वचनम्। हृदयहारि मनोहरम्, अभिमतमित्यर्थः। अनुमोदितम् अनुमतम्।

(क) सः राजा। चिरं दीर्घकालम्। नः अस्माकं, यतीनामिति भावः। कृतकृत्यः अनुष्ठितकर्त्तव्यः, सफलप्रयत्न इत्यर्थः।

(ख) आसादितं लब्धम्। अनुपकृत्य उपकारमकृत्वा। सिद्धं सम्पन्नं, तवोपकारकरणादिति भावः।

(ग) यथाऽऽदेशम् आदेशानुरूपं, श्वासवायून् निगृह्य इत्यर्थः। कन्धरायां ग्रीवादेशे। अजहात् अत्यजत्।

तीरच्छिद्रे निधाय नीरान्निरगच्छम्। सद्यः-सङ्गतानाञ्च सैनिकानां तदत्यचित्रीयत (घ) आकारान्तरग्रहणम्।

अथ गजस्कन्धगतः राजभवनं प्रविश्य कथमपि निशां नीत्वा प्रातः कृतनित्यक्रियः सिंहासनासीनः पार्श्ववर्त्तिनोऽमात्यादीन् प्रावोचं, 'दृश्यतां शक्तिरार्षी, अद्य नास्तिकानां (ङ) जायेत लज्जानतं शिरः।' ते च हर्षविस्मयाक्रान्तचेतसः 'जय प्रभो! स्वतेजसा अतिशय्य दश दिशः' इत्याशास्य (च) यथाऽधिकारमन्वतिष्ठन्। अहञ्च प्रियायाः सखीं शशाङ्कसेनां रहसि समागतामब्रवं, 'कच्चित् (छ) अयं दृष्टस्त्वया जनः?' इति। सा मां निरीक्ष्य हर्षकाष्ठां गता बद्धाञ्जलिः 'नितरां दृष्टः यदि न स्यादैन्द्रजालिकस्य जालं, तत् कथयतु देवः किमेतत्?' इति सनिर्बन्धम् (ज) अकथयत्। अहञ्चास्यै सर्वं यथावदाख्याय तन्मुखेन प्रियां प्रीणयित्वा तयैव दयितया निरर्गलीकृतातिसत्कृतकलिङ्गनाथ-न्यायदत्तया सङ्गत्य अन्ध्रकलिङ्गराज्यं कलिङ्गनाथे न्यस्य अरिणा लिलङ्घयिषितस्याङ्गराजस्य साहाय्यार्थं बहुभिः साधनैः समागतः सखिजनसमेतस्य देवस्य याद्दच्छिकदर्शनसुखम् (झ) अनुभवामि" इति।

---

(घ) अत्यचित्रीयत अतिशयेनाद्भुतमिव आचरति स्म इत्यर्थः।

(ङ) आर्षी ऋषिसम्बन्धिनी। नास्तिकानाम् ईश्वरो नास्तीतिवादिनाम्।

(च) अतिशय्य उल्लङ्घ्य, आक्रम्य इत्यर्थः। आशास्य आशीर्वचनमुच्चार्य।

(छ) कच्चित् इति प्रश्नार्थकमव्ययम्।

(ज) हर्षकाष्ठाम् आनन्दप्रकर्षम्, आनन्दातिशयमित्यर्थः, ("काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः इति मेदिनी)। नितराम् अत्यर्थम्। जालं दम्भः, माया इति यावत्, ("जालं वृन्दगवाक्षयोः। क्षारकानायदम्भेषु" इति रभसः)। सनिर्बन्धं साग्रहम्।

(झ) दयितया प्रियया, कनकलेखया इति यावत्। निरर्गलीति।—निरर्गली-कृतं निर्बाधं यथा तथा, अतिसत्कृतेन कृतातिसद्व्यवहारेण, कलिङ्गनाथेन कलिङ्गाधिपेन कर्दनेन, न्यायेन विधिना, यथाशास्त्रमित्यर्थः, दत्तया समर्पितया। न्यस्य समर्प्य। अरिणा शत्रुवर्मणा। लिलङ्घयिषितस्य लङ्घयितुमिष्टस्य, आक्रान्तस्ये-त्यर्थः। साधनैः सैन्यैः, ("साधनं धृतसंस्कारे सैन्ये सिद्धौषधौ गतौ" इति

तदाकर्ण्य देवो राजवाहनः "चित्रमिदं महामुनेर्वृत्तम्" (ञ)
स्मितविकसिताननस्तमभिनन्द्य विश्रुते दृष्टिं चिक्षेप ।

इति सप्तमोच्छ्वासः ।

---

# अथ अष्टमोच्छ्वासः ।

## विश्रुतचरितम् ।

सोऽब्रवीत् "देव ! मयाऽपि पर्य्यटता विन्ध्याटव्यां कोऽपि कु ऽष्टवर्षीयः कश्चित् कूपाभ्यासे क्लिश्यन् (क) दृष्टः । स तासगद्गद 'महाभाग ! क्लिष्टस्य मे क्रियतां किञ्चित् साहाय्यं, मम प्रा हारिणीं पिपासां प्रतिकर्त्तुमुदकमुत्तोलयन्निह कूपे कोऽपि म मनैकशरणभूतः पतितः, तं नाहम् उद्धर्तुमलम्' (ख) इति । तदाकर्ण्य व्रतत्या कयाऽपि वृद्धमुत्तार्य्य तञ्च बालं कथमपि भिरद्भिः फलैश्च पञ्चषैर्वृक्षात् पाषाणपातितैः प्रत्यानीतप्राण मापाद्य तरुतलनिषण्णस्तं वृद्धमभाषि, 'तात ! क एष बालः भवान् ? कथमिमं देशमापद्य (ग) आपदि पतितः ?' इति ।

---

मेदिनी )। याहच्छिकेति ।—याहच्छिकं यदृच्छानिष्पन्नं, सहसा प्राप्तमित्यर्थः दर्शनं साक्षात्कारः, तेन सुखम् आनन्दम् ।

(ञ) वृत्तं चरितम् ।

---

(क) कूपाभ्यासे कूपसमीपे । क्लिश्यन् खिद्यमानः ।

(ख) प्राणापहारिणीं जीवनान्तकारिणीम् । प्रतिकर्त्तुं निवारयितुम् । वृद्धः । मनैकशरणभूतः मम एकमात्राश्रयस्वरूपः । अलं समर्थः, ("अ समर्थौ:" इत्यमरः ) ।

(ग) व्रतत्या लतया, ("वल्ली तु व्रततिर्लता" इत्यमरः ) । पञ्चषैः षट् वा परिमाणमेषामिति तथोक्तैः, पञ्चभिः षड्भिर्वा इत्यर्थः । पाषाण शिलाखण्डप्रक्षेपेण भ्रंशितैः । प्रत्यानीतेति ।—प्रत्यानीता प्रत्यावर्त्तिता, प्रा

गद्गदमवादीत्, 'महाभाग ! आसीत् विदर्भाधिपतिः परमधार्मिकः राजनीतिकुशलः पुण्यवर्मा नाम। तस्मिंश्च कालेनोपरते (घ) तत्सुतोऽनन्तवर्मा नाम तत्सिंहासनमध्यतिष्ठत्। स तु सर्वगुणसम्पन्नोऽपि दण्डनीत्यां नातिकुशल (ङ) आसीत्। एकदा रहसि वसुरक्षितो नाम महामन्त्री तं दण्डनीत्यनुशीलने (च) सविशेषमनुरुरोध, दर्शयामास च तदनुशीलनस्य फलमननुशीलनस्य च दोषम्।

स तु तदाकर्ण्य 'स्थाने एव गुरुभिरुपदिश्यते, तथा क्रियते' इत्युक्त्वा अन्तःपुरगतः तद्वार्त्तां प्रमदानां सन्निधौ समाचष्ट। (छ) तत्र स्थितस्तस्य नर्मसचिवश्चित्तानुवृत्तिकुशलः सङ्गीतव्यापारनिपुणः परमर्मान्वेषणपरः सकलदुर्नयोपाध्यायः कामतन्त्रकर्णधारः कुमारसेवको (ज) विहारभद्रो नाम सस्मितमभाषत, 'देव ! दैवानुग्रहेण यदि कश्चित् भाजनं भवति विभूतेः, तं विविधकौशलैः प्रतार्य्य स्वार्थं साधयन्ति धूर्ताः; सम्यक् नीतिशास्त्रपरिशीलनं केवलं क्लेशाय, नात्र अणवपि (झ) सुखमुपकारो वा। यावता च नयेन विना न लोकयात्रा, स लोकत

---

असूनां, प्राणवायोरित्यर्थः. वृत्तिः व्यापारः, अवस्थितिरित्यर्थः यस्य तादृशम्। आपाद्य कृत्वा। आपद्य प्राप्य।

(घ) उपरते मृते।

(ङ) दण्डनीत्यां राजनीतौ। नातिकुशलः नातिनिपुणः।

(च) दण्डनीत्यनुशीलने राजनीतेर्विशेषेणालोचनायाम्।

(छ) स्थाने एव युक्तमेव। समाचष्ट अकथयत्।

(ज) तत्र अन्तःपुरे। तस्य अनन्तवर्मणः। नर्मसचिवः परिहाससहचरः, विदूषक इति भावः। परेति।—परेषाम् अन्येषां, मर्म गुह्यव्यापार इत्यर्थः, तस्य अन्वेषणपरः अनुसन्धानदक्षः, परच्छिद्रानुसन्धाननिरतः इत्यर्थः। सकलेति।—सकलानां सर्वविधानां, दुर्नयानां दुष्टनीतीनाम्, असद्व्यवहाराणामित्यर्थः, उपाध्यायः आचार्य्यः, शिक्षक इत्यर्थः। कामेति।—कामतन्त्रस्य अनङ्गव्यापारस्य, कर्णधारः नाविकः। कुमारसेवकः आशैशवपरिचारकः।

(झ) भाजनं पात्रम्, आश्रय इत्यर्थः। विभूतेः ऐश्वर्य्यस्य। स्वार्थं निज-प्रयोजनम्। अणवपि अत्यल्पमपि।

एव प्रसङ्गः, न अत्र शास्त्रस्यार्थः। (ञ) स्तनन्धयोऽपि विना उपदेशं जनन्याः स्तन्यं पिबति, तदपास्य अतियन्त्रणाम् (ट) अनुभूयन्तामिन्द्रियसुखानि। येऽप्युपदिशन्ति 'इन्द्रियाणि जेतव्यानि, अरिषड्वर्गस्त्याज्यः, सामादिः उपायवर्गः स्वेषु परेषु च अजस्रं प्रयोज्यः, सन्धिविग्रहादिचिन्तयैव नेयः कालः, स्वल्पोऽपि सुखावकाशो न देयः' इति, तैरपि धूर्त्तैः युष्मत्तश्शौर्य्यार्जितं धनं दासीगृहेषु (ठ) भुज्यते। ये च नीतिशास्त्रकाराः शुक्राङ्गिरसपराशरप्रभृतयः, तैः किमरिषड्वर्गो जितः? कृतं वा तैः शास्त्रानुष्ठानम्? तैरपि प्रारब्धेषु कार्य्येषु दृष्टे सिद्धासिद्धी। (ड) देवस्य किमनुपपन्नम्? सर्वलोकाराध्या जातिः, नवं वयः, दर्शनीयं वपुः, अपरिमिता विभूतिः, एतत् सर्वं सर्वभोगवर्जितः मा कृथा (ढ) वृथा। सन्ति ते दन्तिनां दशसहस्राणि, हयानां लक्षत्रयम्, अनन्तञ्च पादातं, पूर्णान्येव हेमरत्नैः कोषगृहाणि, (ण) सर्व एव जीवलोकः युगसहस्रं भुञ्जानः न क्षयं नेष्यति। जीवितं हि नाम क्षणिकं, तत्रापि भोगयोग्यं वयः अत्यल्पम्, अपण्डिताः

---

(ञ) लोकयात्रा संसारनिर्वाहः। लोकतः लोकव्यवहारदर्शनादेवेत्यर्थः। अत्र लोकयात्रोपयोगिनयज्ञाने। अर्थः प्रयोजनम्।

(ट) स्तनन्धयोऽपि स्तन्यपायी शिशुरपि। स्तन्यं स्तनदुग्धम्। अपास्य परित्यज्य। अतियन्त्रणाम् अतिशयेन बन्धनं, सुखभोगस्य व्याघातकं नीतिशास्त्रानुशीलनमित्यर्थः।

(ठ) जेतव्यानि वशीकार्य्याणि। अरिषड्वर्गः कामक्रोधलोभमोहमदमात्सर्य्यरूपं रिपुषट्कम्। सामादिः साम दानं भेदः दण्डश्च। उपायवर्गः साधनचतुष्टयं, ("भेदो दण्डः साम दानमित्युपायचतुष्टयम्" इत्यमरः)। स्वेषु स्वराष्ट्रेषु। परेषु परराष्ट्रेषु। नेयः यापनीयः। दासीगृहेषु गणिकालयेषु इत्यर्थः।

(ड) सिद्धासिद्धी साफल्यासाफल्ये, कदाचित् साफल्यं कदाचित् असाफल्यमित्यर्थः।

(ढ) देवस्य राज्ञो भवतः। अनुपपन्नम् अप्राप्तम्, अप्राप्यं नासीत्यर्थः। जातिः जन्म, राजवंशे उत्पत्तिरित्यर्थः। अपरिमिता प्रभूता। मा कृथा न कुरु।

(ण) दन्तिनां हस्तिनाम्। हयानाम् अश्वानाम्। अनन्तम् अपरिमितम्। पादातं पदातिसैन्यम्। कोषगृहाणि धनागाराणि।

पुनरर्जयन्त एव ध्वंसन्ते, नार्जितस्य लवमपि आस्वादयितुमीहन्ते। (त) किं बहुना, राज्यभारम् अन्तरङ्गेषु समर्प्य अप्सरःप्रतिरूपाभिरन्तःपुरिकाभिः रममाणो गीतपानगोष्ठीश्च यथर्तु अनुभवन् यथार्थं कुरु शरीरलाभम्' इति पञ्चाङ्गीस्पृष्टभूमिः अञ्जलिचुम्बितचूडः चिरं (थ) प्राणमत्।

तदाकर्ण्य अन्तःपुरिकागणः प्राहसीत्। जननाथश्च सम्प्रहृष्टः समुत्तिष्ठन् तं प्रणतमुत्थाप्य 'ननु हितोपदेशात् गुरवो भवन्तः, किं गुरुत्वविपरीतम् (द) अनुष्ठितम्?' इति वदन् क्रीडाजिर्मरमतिष्ठत्।

अथ वृद्धमन्त्रिणोपदिष्टं वचसा अनुमोदते स्म परं (ध) कार्य्यतः न अनुतिष्ठति स्म। क्रमेण नयज्ञे तस्मिन् विद्वेषमेव अदर्शयत्, अभवच्च कामप्रवृत्तो (न) भोगसुखेषु नितरामासक्तः। एवं गते चन्द्रपालितो नामाश्मकेन्द्रस्य वसन्तभानोर्मन्त्रिपुत्रः पितृनिर्वासितो नाम भूत्वा बहुभिश्चारणैर्वञ्चकैरनल्पकौशलाभिः शिल्पकारिणीभिरनेकैश्च प्रच्छन्नकिङ्करैर्गूढपुरुषैश्च परिवृतोऽस्येत्य विविधकौशलैः विहारभद्रमात्मसादकरोत्, अलभत च अमुनैव द्वारेण राजन्यास्पदम्। (प) स च

(त) चणिकं क्षणस्थायि। अपण्डिताः मूर्खाः। अर्जयन्तः उपार्जनं कुर्वन्तः। लवमपि लेशमपि। ईहन्ते चेष्टन्ते।

(थ) अन्तरङ्गेषु विश्वस्तेषु इत्यर्थः। गीतपानगोष्ठीः सङ्गीतमद्यपानसभाः। यथर्तु ऋत्वनुरूपम्। पञ्चाङ्गीति।—पञ्चानाम् अङ्गानां जानुद्वय-बाहुद्वय-मूर्द्धरूपाणामवयवपञ्चकानां समाहारः पञ्चाङ्गी, ("जानुबाहुद्वयं मूर्द्धा पञ्चाङ्गम" इत्युत्पलिनी) तया स्पृष्टा भूमिः अवनियेन तादृशः, अङ्गपञ्चकेन भूमिं स्पृशन् इत्यर्थः। अञ्जलीति।—अञ्जलिना संयुक्तकरद्वयेन चुम्बिता स्पृष्टा इत्यर्थः, चूडा मौलिः, मस्तकमिति यावत् येन तादृशः। चिरं दीर्घकालं व्याप्य।

(द) गुरुत्वविपरीतं लघुत्वसूचकं प्रणाममित्यर्थः।

(ध) परं किन्तु। (न) नयज्ञे नीतिवेदिनि। कामप्रवृत्तः यथेच्छाचारपरायणः।

(प) अश्मकेन्द्रस्य अश्मकदेशाधिपतेः। नाम इति अलीके, पित्रा अहं निर्वासित इति छलं कृत्वा इत्यर्थः। चारणैः कुशीलवैः, स्तुतिपाठकैरित्यर्थः, गायकैरिति वा, ("चारणो गायकः समौ" इति वैजयन्ती)। शिल्पकारिणीभिः चित्रकरीभिरित्यर्थः। प्रच्छन्नकिङ्करैः निगूढभृत्यैः, भृत्यपरिचयेन अवस्थितैरित्यर्थः। गूढ-

लब्धरन्ध्रः राजानं व्यसनानां गुणव्याख्यानेन नितरां प्रीणयन् तदेकासक्तम् (फ) अकार्षीत्। असावपि राजा गुरूपदेशमिव तन्मतमन्ववर्त्तत। प्रकृतयश्च तच्छीलानुवर्त्तिन्यः विशृङ्खलम् (ब) असेवन्त व्यसनानि। सर्वश्च समानदोषतया न कस्यापि दोषान्वेषणे अयतिष्ट। समानभर्त्तृ-प्रकृतयश्च राष्ट्राध्यक्षाः स्वानि स्वानि (भ) राजस्वादीनि स्वयमभक्षयन्। क्रमेण आयद्वाराणि व्यशीर्य्यन्त, व्ययाश्च विभोर्विटविधेयतया (म) प्रतिदिनमवर्द्धन्त। सामन्तपौरजानपदाश्च समानशीलतया उपारूढविस्रम्भेण राज्ञा सजानयः पानगोष्ठीष्वभ्यन्तरीकृताः स्वं स्वमाचारम् (य) अत्यक्रामन्।

---

प्रकर्षैः चरैः। आत्मसात् आत्माधीनं, स्ववशीभूतमित्यर्थः। अमुना विहारभद्ररूपेण। द्वारेण उपायेन, विहारभद्रस्य साहाय्येनेत्यर्थः। आस्पदं प्रतिष्ठाम्।

(फ) लब्धरन्ध्रः प्राप्तच्छिद्रः, अवसरं बुद्ध्वा इत्यर्थः। व्यसनानां कामज-क्रोधज-दोषाणाम्; व्यसनञ्च अष्टादशविधं, तथा च मनुः, "मृगयाऽक्षो दिवास्वप्नः परीवादः स्त्रियो मदः। तौर्य्यत्रिकं वृथाऽट्या च कामजो दशको गणः॥ पैशुन्यं साहसं द्रोहः ईर्ष्याऽसूयाऽर्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः॥" इति। ("व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः)। तदेकासक्तं केवलं व्यसनानुरक्तम्।

(ब) प्रकृतयः अमात्यादयः पौरवर्गाश्च, ("लिङ्गे स्वभावे प्रकृतिः पौरामात्यादियोनिषु" इति शाश्वतः)। तच्छीलानुवर्त्तिन्यः राज्ञः स्वभावानुकारिण्यः। विशृङ्खलं यथेच्छं, निर्बाधमित्यर्थः।

(भ) समानेति।—समानाः तुल्याः, तुल्यस्वभावा इत्यर्थः, भर्त्ता अधिपतिः, राजा इत्यर्थः, प्रकृतयः प्रजाश्च येषां तादृशाः। राष्ट्राध्यक्षाः राजकार्य्येषु मुख्याधिकारिणः। स्वानि स्वानि निजनिजहस्तगतानीत्यर्थः।

(म) आयद्वाराणि अर्थागमोपायाः। व्यशीर्य्यन्त अक्षयन्, क्षयमगच्छन् इत्यर्थः। विभोः राज्ञः। विटविधेयतया विटानां धूर्त्तानां, विधेयतया वचनकारितया, वशीभूततयेत्यर्थः, वेश्यासक्तलम्पटादीनां वचनानुसारेण कार्य्यकारितया इति भावः।

(य) उपारूढविस्रम्भेण सञ्जातविश्वासेन। सजानयः सह जायया वर्त्तमाना इति तादृशाः, सस्त्रीका इत्यर्थः, ("जायाया निङ्" इति समासान्तः)। पानगोष्ठीषु मद्यपानसभासु—अभ्यन्तरीकृताः अन्तरङ्गीकृताः, प्रवेशिता इत्यर्थः। स्वं स्वमाचारम् अन्तःपुरिकाणां विशुद्धितारक्षणरूपं राज्ञे सम्मानप्रदर्शनरूपञ्च कर्त्तव्याचरणम्।

तदङ्गनासु च राजा ते च राजान्तःपुरिकासु (र) निर्भयं विहरन्ति स्म। सर्वश्च कुलाङ्गनाजनः छिन्नचारित्रबन्धनस्तृणाय अपि न मत्वा भर्तॄन् जारेषु (ल) अरमत। तन्मूलाश्च (व) विवादाः सक्रोधानामुदभवन्। अहन्यन्त च दुर्बलाः प्रबलैः। अपहृतानि धनवतां धनानि तस्करादिभिः। हतबान्धवा हृतवित्ता बधबन्धातुराश्च मुक्तकण्ठमाक्रोशन् (श) अश्रुकण्ठाः प्रजाः। दण्डश्च अयथाप्रयुक्तो (ष) भयक्रोधावजनयत्। कृशकुटुम्बेषु लोभः पदम् (स) अधत्त। विमानिताश्च तेजस्विनो मानेन अदह्यन्त।

अस्मिंश्च समये अश्मकेन्द्रप्रयुक्ताः तीक्ष्णरसदादयो गूढपुरुषाः नानाविधकौशलैः प्रक्षपितप्रवीरमनन्तवर्मकटकं जर्जरम् (ह) अकुर्वन्। अथ वसन्तभानुर्भानुवर्माणं नाम वनचराधिपं प्रोत्साह्य अनन्तवर्मणा व्यग्राहयत्। (क) अनन्तवर्मा च तदाक्रान्तराष्ट्रपर्यन्तस्तमभियोक्तुं बलसमुत्थानम् (ख) अकरोत्। अश्मकेन्द्रश्च वसन्तभानुः सर्वेभ्यः सामन्तेभ्यः

---

(र) तदङ्गनासु सामन्तादीनां स्त्रीषु। ते सामन्तादयः। राजान्तःपुरिकासु राज्ञः अन्तःपुरवर्त्तिमहिलासु।

(ल) छिन्नेति।—छिन्नं त्रुटितम्, अपगतमित्यर्थः, चारित्रं सौशील्यमेव, बन्धनं नियमनं येन तादृशः, पातिव्रत्यनियमं दूरीकृत्य इत्यर्थः। तृणाय अपि न मत्वा तृणवत् अनादृत्य इत्यर्थः, ("मन्यकर्मणि अनादरे विभाषाऽप्राणिषु" इति सूत्रेण अनादरार्थे कर्मणि चतुर्थी)। जारेषु उपपतिषु।

(व) तन्मूलाः जारहेतुकाः।

(श) मुक्तकण्ठम् उच्चैःस्वरेणेत्यर्थः। आक्रोशन् अवदन्।

(ष) दण्डः, राजकीयविचारजः इति शेषः। अयथाप्रयुक्तः अन्यायरूपेण विहितः।

(स) कृशकुटुम्बेषु दरिद्रपरिवारेषु। पदं स्थानम्।

(ह) अश्मकेन्द्रप्रयुक्ताः अश्मकदेशाधिपतिवसन्तभानुना नियुक्ताः। तीक्ष्णरसदादयः तीव्रविषप्रयोक्तृप्रभृतयः। प्रक्षपितेति।—प्रक्षपिताः प्रकर्षेण क्षपिताः नाशिताः, प्रवीराः प्रकृष्टयोधाः यस्य तादृशम्। अनन्तवर्मकटकम् अनन्तवर्मणः सैन्यम्। जर्जरं जीर्णं, नाशोन्मुखमित्यर्थः।

(क) वनचराधिपं वनवासिकिरातादीनामधीश्वरम्। व्यग्राहयत् अयोधयत्।

(ख) तदिति।—तेन भानुवर्मणा, आक्रान्तः अवरुद्धः, राष्ट्रपर्यन्तः राज्यस्य

प्राक् आगत्य अस्य (ग) प्रियतरोऽभूत्। अपरे च सामन्ताः प्रभुसाहाय्यार्थं समागताः नर्मदारोधसि (घ) शिविरं सन्न्यविशन्त। अस्मिंश्च अवसरे राजा अनन्तवर्मा महासामन्तस्य कुन्तलपतेरवन्तिदेवस्य नर्त्तकीं क्षमातलोर्वशीं नाम आहूय चन्द्रपालितादिभिर्नृत्यमद्राक्षीत्, अतिरक्तश्च भुक्तवानिमां मधुमत्ताम्। (ङ) ततोऽश्मकपतिः कुन्तलेश्वरम् एकान्तेऽवदत्, 'प्रमत्त एव राजा कलत्राणि नः परामृशति, कियत्यवज्ञा सोढव्या? मम शतमस्ति दन्तिनां, पञ्च शतानि ते; तदावां सम्भूय मुरलेशं वीरसेनम् ऋचीकेशमेकवीरं कोङ्कणपतिं कुमारगुप्तं नासिक्यनाथं नागपालञ्च उपजपाव, ते च अवश्यम् अस्य विनयमसहमाना अस्मन्मतेनैव उपावर्तेरन्। (च) अयञ्च वनेचराधिपः भानुवर्मा प्रियं मे मित्रम्, असुना एनं दुर्विनीतम् अग्रतः अभियुक्तं पृष्ठतः प्रहरेम, कोषवाहनञ्च (छ) विभज्य गृह्णीमः' इति।

हृष्टेन च अमुना (ज) 'तथा अस्तु' इति स्वीकृते तानपि सामन्तानसौ वसन्तभानुः स्वमतावस्थापयत्। परेद्युश्च सर्वे मिलित्वा अनन्तवर्माणं

---

प्रान्तसीमा यस्य तादृशः। अभियोक्तुम् आक्रमितुम्। बलसमुत्थानं सैन्योद्योगम्।

(ग) अस्य अनन्तवर्मणः।

(घ) नर्मदारोधसि नर्मदातटे।

(ङ) महासामन्तस्य प्रधानसामन्तस्य। क्षमातलोर्वशीं भूतलोर्वशीं, मर्त्यलोके उर्वशीतुल्यपरमसुन्दरीमिति भावः। भुक्तवान् सम्भोगं कृतवान्। मधुमत्तां मद्यपानोन्मत्ताम्।

(च) परामृशति स्पृशति, बलात्करोतीत्यर्थः। सोढव्या सहनीया। सम्भूय मिलित्वा। मुरलेशं मुरला नर्मदा नदी, तत्समीपवर्त्तिदेशाधिपम्। ऋचीकेशम् ऋचीकाख्यदेशाधिपम्। कोङ्कणपतिं कोङ्कणाख्यदेशाधीश्वरम्। नासिक्यनाथं नासिक्याख्यदेशाधीश्वरम्। उपजपाव भेदयाव, अनन्तवर्मणः अधीनतां त्यक्तुम् उत्तेजयाव इत्यर्थः, (आशंसायां लोट्)। अविनयम् औद्धत्यम्। उपावर्तेरन् अवतिष्ठेरन्।

(छ) कोषवाहनं कोषं धनागारं, वाहनं हस्त्यश्वादिकञ्च।

(ज) अमुना कुन्तलेश्वरेणावन्तिदेवेन।

व्यनाशयत् । वसन्तभानुश्च तत्कोषवाहनं शाठ्येन सर्वान् सामन्तान् भ्रंशयित्वा (झ) आत्मसात् कृत्वा भानुवर्माणं कियतांऽशेन सन्तोष्य अनन्तवर्मराज्यमग्रहीत् ।

अस्मिंश्च अवसरे मन्त्रिवृद्धो वसुरक्षितः कैश्चिन्मौलैः सम्भूय बालमेनं भास्करवर्माणम् अस्य एव ज्यायसीं भगिनीं त्रयोदशवर्षीयां मञ्जुवादिनीमनयोश्च मातरं महादेवीं वसुन्धरामादाय अपसर्पन् अस्या आपदो भावितया दाहज्वरेण देहमजहात् । (ञ) किंकर्तव्यमूढैश्च अस्माभिः नीत्वा माहिष्मतीं भर्तृद्वैमातुराय भ्रात्रे मित्रवर्मणे सापत्या देवी (ट) दर्शिता । तांश्च आर्य्यां असौ अन्यथा अभ्यमन्यत । (ठ) निर्भर्त्सितश्च तया 'सुतमियम् अखण्डचारित्रा राजानं चिकीर्षति' इति नैर्घृण्यात् बालमिमम् अजिघांसीत् । (ड) इदन्तु ज्ञात्वा देव्या अहमाज्ञप्तः, 'तात नालीजङ्घ ! जीवता अनेनार्भकेण यत्र क्वचिदवधाय जीव, जीवेयञ्चेदहमपि

(झ) शाठ्येन चातुर्य्येण । भ्रंशयित्वा नाशयित्वा वञ्चयित्वा वा ।

(ञ) मौलैः मूलादागतैः, कुलक्रमागतभृत्यैरित्यर्थः । ज्यायसीं ज्येष्ठाम् । अनयोः मञ्जुवादिनीभास्करवर्मणोः । महादेवीं महाराज्ञीम् । अपसर्पन् पलायमानः । अस्याः वर्त्तमानायाः । भावितया अवश्यम्भावित्वेन । अजहात् अत्यजत् ।

(ट) किंकर्त्तव्यविमूढैः कर्त्तव्यनिर्णयाक्षमैः । माहिष्मतीं तन्नामपुरीम् । भर्तृद्वैमातुराय भर्त्तुः अनन्तवर्मणः, द्वैमातुराय द्वितीयाया मातुरपत्याय, वैमात्रेयाय इत्यर्थः, ("मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः" इति मातृशब्दस्य अनि उदादेशः र-प्रत्ययश्च) । यद्वा—द्वैमातुराय द्वयोर्मात्रोरपत्याय, अनन्तवर्मणो माता मित्रवर्मणो माता च —ताभ्यामेव स्तन्यदानादिना पालिताय इत्यर्थः; स्वमात्रा प्रसूताय अनन्तवर्मणो मात्रा च पालिताय इत्यर्थो वा । देवी वसुन्धरा ।

(ठ) आर्य्यां साध्वीम् । असौ मित्रवर्मा । अन्यथा अन्यप्रकारं, भ्रातृजायां प्रति यादृग्व्यवहारः कर्त्तव्यः तद्विपरीतमित्यर्थः । अभ्यमन्यत मनस्यामकरोत्, सतीत्वनाशाय प्रावर्त्तत इति भावः ।

(ड) अखण्डचारित्रा अभ्रष्टचरित्रा, सतीत्यर्थः, इति मौक्तिकोक्तिरवगन्तव्या । नैर्घृण्यात् निर्दयत्वात्, ("घृणा दयाऽनुकम्पा स्यादनुक्रोशः" इत्यमरः) । अजिघांसीत् हन्तुमैच्छत् ।

एनमनुसरिष्यामि, ज्ञापय च मां क्षेमवार्त्ताम्' (ढ) इति। अहन्तु सङ्कुले राजकुले कथञ्चिदपसार्य्य एनं विन्ध्याटवीं व्यगाहिषि। (ण) पादचारक्लान्तमेनं क्वचित् घोषे कानिचिदहानि विश्रमय्य तत्रापि राजपुरुषसम्पातभीतो (त) दूरमपासरम्। तत्र अस्य दारुणपिपासापीड़ितस्य पयो दातुकामः कूपेऽस्मिन् पतितस्त्वया एवमनुगृहीतः। त्वमेव अस्य शरणमेधि विशरणस्य (थ) राजसूनोः' इत्यञ्जलिमबध्नात्।

'का जातिरस्य मातुः?' इति पृष्टे मया तेन (द) उक्तं, 'पाटलिपुत्रस्य वणिजो वैश्रवणस्य दुहितरि सागरदत्तायां कोशलेन्द्रात् कुसुमधन्वनोऽस्य माता जाता' इति। 'यदि एवमेतन्मातुर्मत्पितुश्चैको मातामहः' इति सस्नेहं तमहं सस्वजे। (ध) वृद्धेन 'सिन्धुदत्तपुत्राणां कतमस्ते पिता?' इति अनुयुक्ते (न) 'सुश्रुतः' इत्युक्तवन्तं मामसौ श्रुत्वा भृशमनन्दत्। अहन्तु 'तं नयावलिप्तम् अकल्कं नयेनैवोन्मूल्य बालमेनं पित्र्ये पदे प्रतिष्ठापयेयम्' इति प्रतिज्ञाय 'कथमस्य लुब्धं क्षपयेयम्?'

---

(ढ) अर्भकेण बालकेन, (सहार्थे तृतीया)। अवधाय अप्रमत्तो भूत्वा, सावधानेन इत्यर्थः। जीव प्राणान् रक्ष। जीवेयं प्राण्यां, जीविता स्यामित्यर्थः। एनं बालम्। क्षेमवार्त्तां कुशलवृत्तान्तं, निर्विघ्नेन अवस्थितिवृत्तान्तमित्यर्थः।

(ण) सङ्कुले आकीर्णे, बहुजनव्याप्ते इत्यर्थः। अपसार्य्य निर्गमय्य। व्यगाहिषि प्रविशामि स्म।

(त) पादचारक्लान्तं पद्भ्यां दीर्घपथपर्य्यटनेन परिश्रान्तम्। घोषे आभीरपल्ल्यां, ("घोष आभीरपल्ली स्यात्" इत्यमरः)। राजेति।—राजपुरुषाणां मित्रवर्मपक्षीयरक्षिजनानां, सम्पातात् समागमनात्, अस्मदनुसन्धानार्थमिति भावः, भीतः त्रस्तः।

(थ) शरणं रक्षिता, ("शरणं गृहरक्षित्रोः" इत्यमरः)। एधि भव। विशरणस्य निराश्रयस्य, रक्षकविहीनस्य इत्यर्थः।

(द) तेन नालीजङ्घेन।

(ध) एतन्मातुः एतस्य बालस्य, मातुः वसुन्धरायाः। सस्वजे आलिलिङ्ग।

(न) "सिन्धुदत्तपुत्राणाम्" इत्यत्र "पद्मोद्भवपुत्रयोः" इति पाठो युक्ततया प्रतिभाति, पूर्वपीठिकायां सिन्धुदत्तस्यानुल्लेखात् सुश्रुतपितुः पद्मोद्भवेति नामत्वात् तथा पद्मोद्भवस्य पुत्रद्वयमात्रत्वादिति। अनुयुक्ते पृष्टे।

इति यावदचिन्तयं, तावत् आपतितौ कस्यापि व्याधस्य वीनिषून् अतीत्य (प) द्वौ मृगौ स च व्याधः। अहन्तु तस्य हस्तादिषुद्वयं कोदण्डञ्च आक्षिप्य मृगावबधिषं, तत्रैकः सपत्राकृतः अपरो निष्पत्राकृतः (फ) पपात। एकञ्च मृगं मृगयवे दत्त्वा अन्येन तयोरात्मनश्च वृत्तिम् (ब) अकार्षम्। तेन च कर्मणा तुष्टं किरातमपृच्छम्, 'अपि (भ) जानासि माहिष्मतीवृत्तान्तम्?' इति। असौ आचष्ट, 'तत्र व्याघ्रत्वचो विक्रीय अद्य एवागतोऽहं, किं न जानासि? प्रचण्डवर्मा नाम चण्डवर्मानुजो मित्रवर्मदुहितरं मञ्जुवादिनीं लिप्सुरभ्येति, तेन एव उत्सवोत्तरा (म) पुरी' इति।

तदाकर्ण्य कर्णौ वृद्धमब्रवं, 'धूर्त्तौ मित्रवर्मा दुहितरि सम्यक् प्रतिपत्त्या मातरं विश्वास्य तन्मुखेन बालकमाकृष्य जिघांसति, तत् प्रतिगत्य कुशलमस्य मद्वार्त्ताञ्च देव्यै रहो निवेद्य 'कुमारः शार्दूलभक्षितः' इति प्रकाशमाक्रोशः (य) कार्य्यः। स (र) दुर्मतिरन्तःप्रीतो वहिर्दुःखं दर्शयन्

(प) नयावलिप्तं नीतिगर्वितम्, अहं राजनीतिकुशल इत्यभिमानिनमित्यर्थः। नयेन नीतिप्रयोगेण। च्यावयेयं नाशयेयम्। आपतितौ समागतौ। इषून् बाणान्। अतीत्य अतिक्रम्य।

(फ) कोदण्डं धनुः। आक्षिप्य आकृष्य। सपत्राकृतः पत्रेण पक्षेण सह इति सपत्रः तथाकृतः सपुङ्खशरप्रवेशनेनातिपीड़ितः कृतः इत्यर्थः, ("सपत्रनिष्पत्रादतिव्यथने" इति डाच्-प्रत्ययान्तः)। निष्पत्राकृतः पत्ररहितो विद्धः, मृगस्य पार्श्वद्वयं भित्त्वा वहिर्निर्गमनेनातिपीड़ितः कृत इत्यर्थः।

(ब) मृगयवे व्याधाय। तयोः बालकनालीजङ्घयोः। वृत्तिं जीविकां, जीवनरक्षणमित्यर्थः, क्षुन्निवारणमिति यावत्।

(भ) किरातं व्याधम्। अपि प्रश्ने।

(म) लिप्सुः लब्धुमिच्छुः। अभ्येति आगच्छति। उत्सवोत्तरा उत्सवबहुला।

(य) वृद्धं नालीजङ्घम्। दुहितरि मञ्जुवादिन्याम्। सम्यक् यथोचितं, प्रतिपत्त्या प्रवृत्त्या, कार्य्यसम्पादने प्रवृत्त्या इत्यर्थः, स्नेहप्रदर्शनेनेति यावत्। तन्मुखेन तदुपायेन, विश्वासोत्पादनद्वारा इत्यर्थः। आकृष्य समीपमानीय। देव्यै वसुन्धरायै। रहः निर्जने। शार्दूलभक्षितः व्याघ्रेण खादितः। प्रकाशं सर्वजनसमक्षम्। आक्रोशः रोदनमित्यर्थः।

(र) सः मित्रवर्मा।

देवीमनुगमिष्यति। पुनस्तया त्वन्मुखेन स वाच्यः, 'यदपेक्षया त्वन्मतमतिक्रमितवती (ल) सोऽपि बालः पापेन मे परलोकमगात्; अद्य तु त्वदादेशवर्त्तिनी एवाहम्' इति। स तथोक्तः परां प्रीतिमापत्स्यते। अथ विषयुक्तया मालया असौ धर्षयितुमागतः पापः 'स एवायम् (व) असिप्रहारस्ते पापीयसो भवतु यदि अस्मि पतिव्रता' इति तथा प्रहर्त्तव्यः, यथा सद्य एव प्राणान् त्यजेत्। ततश्च सा माला गूढमगदेनानेन सङ्क्रमिते अम्भसि क्षालिता स्वदुहित्रे (श) देया। मृते तस्मिन् तस्याञ्च निर्विकारायां सत्यां 'सती' इत्येवैनां प्रकृतयोऽनुवर्त्तिष्यन्ते। (ष) प्रचण्डवर्मणे च सन्देष्टव्यम् 'अनाथकम् इदं राज्यम्, अनेनैव सह बालिका इयं स्वीकार्य्या' (स) इति। आवाञ्च कापालिकवेशच्छन्नौ देव्या एव दीयमानभिक्षौ पुरात् बहिरुपश्मशानं (ह) वत्स्यावः। पुनरार्य्यप्रायान् पौरवृद्धान् मन्त्रिवृद्धांश्च एकान्ते ब्रवीतु देवी 'स्वप्नेऽद्य मे देव्या विन्ध्यवासिन्या कृतः प्रसादः, 'चतुर्थेऽहनि प्रचण्डवर्मा मरिष्यति, पञ्चमेऽहनि

---

(ल) तया देव्या। यदपेक्षया यस्य तनयस्य, अपेक्षया अनुरोधेन, यस्य कुशलचिन्तयेति भावः। अतिक्रमितवती उल्लङ्घितवती।

(व) धर्षयितुम अभिभवितुं, सतीत्वनाशनेन अवमन्तुमित्यर्थः, सुरतं विधातुमित्यर्थो वा, ("धर्षणं सुरतं विद्यादभिभूतिश्च धर्षणम्" इति शाश्वतः)। स एवायं मालाप्रहार इत्यर्थः।

(श) गूढं गुप्तं यथा तथा। अगदेन विषघ्नौषधविशेषेण। अनेन मद्दत्तेन एतेन। सङ्क्रमिते सम्मिश्रिते। स्वदुहित्रे निजतनयायै मञ्जुवादिन्यै।

(ष) तस्मिन् मित्रवर्मणि। तस्यां स्वदुहितरि मञ्जुवादिन्याम्। निर्विकारायाम् अविकृतायां, सुस्थशरीरेण जीवन्त्यामित्यर्थः। प्रकृतयः अमात्याः प्रजासमूहाश्च। एनां देवीं वसुन्धराम्। अनुवर्त्तिष्यन्ते अनुसरिष्यन्ति, पूजयिष्यन्ति इति भावः।

(स) सन्देष्टव्यं दूतमुखेन वाचिकं प्रेषणीयम्। अनाथकम् अराजकम्। अनेन राज्येन। बालिका मञ्जुवादिनी। स्वीकार्य्या परिणेतव्या इत्यर्थः, त्वयेति शेषः।

(ह) कापालिकेति।—कापालिकस्य तान्त्रिकसन्यासिविशेषस्य, वेशेन परिच्छदेन, छन्नौ गुप्तौ, कपटसन्यासिवेशधरौ इत्यर्थः। उपश्मशानं श्मशानसमीपे, (सामीप्ये अव्ययीभावः)।

रेवातटवर्त्तिनि मद्भवने परीक्ष्य (क) जनेषु निर्गतेषु कवाटमुद्घाट्य त्वत्सुतेन सह कोऽपि द्विजकुमारो निर्यास्यति । स राज्यमिदम् अनुपाल्य बालं ते पित्र्ये पदे प्रतिष्ठापयिष्यति । स खलु बालो मया व्याघ्रीरूपया तिरस्कृत्य (ख) रक्षितः । सा च इयं वत्सा मञ्जुवादिनी तस्य द्विजसुतस्य दारत्वेन कल्पिता' (ग) इति । तदेतदतिरहस्यं युष्मासु सुगुप्तं तिष्ठतु यावदेतदुपपत्स्यते' (घ) इति ।

स च स्थविरोऽतिहृष्टः प्रयातः सर्वमर्थं यथाऽऽदिष्टं समपादयत् । प्रतिदिशञ्च लोकवादः प्रासर्पत् 'अहो माहात्म्यं पतिव्रतायाः !! असिप्रहार एव असौ मालाप्रहारस्तस्मिन् जातः, न शक्यमुपधियुक्तमेतत् वक्तुं, यतस्तदेव दत्तं दाम दुहितुः स्तनमण्डनमेव जातं नास्या मृत्युः, योऽस्याः पतिव्रतायाः शासनमतिवर्त्तते (ङ) स भस्मैव भवेत्' इति ।

अथ महाव्रतिवेशं (च) मां पुत्रञ्च भिक्षार्थं प्रविष्टं दृष्ट्वा सा देवी प्रस्नुतस्तनी सहर्षमब्रवीत्, 'भगवन् ! अनुगृह्यतामयं जनः, मया एकः स्वप्नो दृष्टः, स किं सत्यः ?' । मयोक्तं, 'फलमस्य अद्य एव द्रक्ष्यसि' इति । अथ मद्दर्शनरागबहुलसाध्वसां मञ्जुवादिनीं प्रणमय्य भूयोऽवदत्, 'तच्चेन्मिथ्या, सोऽयं युष्मदीयो बालकपाली श्वो (छ) मया निरीक्ष्यः'

(क) आर्य्यपादान् सज्जनबहुलान् पौरवृन्देषु मन्त्रिवृन्देषु च ये सज्जनास्तानित्यर्थः । मे मह्यं मां प्रतीत्यर्थः । प्रसादः अनुग्रहः । मद्भवने मम मन्दिरे । परीक्ष्य प्रमाणेन निश्चित्य, गृहाभ्यन्तरे गुप्तभावेन कोऽपि अस्ति नास्ति वा इति विशेषेण अनुसन्धायेत्यर्थः ।

(ख) तिरस्कृत्य आच्छाद्य, गोपायित्वा इत्यर्थः ।

(ग) दारत्वेन भार्य्यात्वेन । कल्पिता निर्मिता, विधात्रा इति शेषः ।

(घ) उपपत्स्यते सेत्स्यति ।

(ङ) लोकवादः जनानामन्योऽन्यालापः । प्रासर्पत प्राचरत । तस्मिन् मदवर्मणि । उपधियुक्तं कपटतापूर्णम् । दाम माला । स्तनमण्डनं स्तनयोराभरणम् । शासनम् आज्ञाम् । अतिवर्त्तते लङ्घयति ।

(च) महाव्रतिवेशं कापालिकवेशधरम् ।

(छ) मद्दर्शन — मम दर्शनेन अवलोकनेन, यः रागः अनुरागः, तेन बहुलं जातं, साध्वसं भयं, लज्जा अनिर्वचनीया इति भावः यस्याः तादृशीम् । बालकपाली बालकव्रती, कापालिकशिशुरित्यर्थः । श्वः आगामिनि दिवसे ।

इति।' अहन्तु 'तथा' इत्युक्त्वा पृष्ठत आयान्तं नालीजङ्घम
असौ प्रचण्डवर्मा ?'। सोऽवदत्, 'राज्यमिदं मम इति
राख्यानमण्डपे (ज) एव तिष्ठति।' 'यदि एवमुद्याने तिष्ठ' इति
मादिश्य तत्प्राकारैकपार्श्वे परिच्छदान् अङ्गादपनीय तद्रक्षणे
नियुज्य कृतकुशीलववेशः प्रचण्डवर्माणमेत्य रञ्जयन् प्रमत्तमे
छुरिकया वक्षसि प्रहृत्य अन्यांश्च तदनुचरान् निपात्य
अत्यलङ्घयम्। (झ) आगत्य च पुनर्नालीजङ्घसविधे प्रतिमुक्तपूर्ववे
कुमार्या मत्कर्मतुमुलराजवर्त्मना (ञ) श्मशानोद्देशमभ्यगाम्।
तस्मिन् दुर्गागृहे प्रतिमाधिष्ठाने एव मया कृतं स्थूलप्रस्त
याच्छद्वारं बिलम्। (ट) निशीथे च वर्षवरोपनीतमहार्हरत्न
निवसनौ तं बिलमावां प्रविश्य तूष्णीम् (ठ) अतिष्ठाव।

---

(ज) कृतमतिः निश्चितचित्तः। आख्यानमण्डपे सभागृहे।

(झ) तदिति।—तस्य उद्यानस्य, प्राकारैकपार्श्वे प्राचीरैकभागे। कृ
कृतः धृत इत्यर्थः, कुशीलवस्य चारणस्य, वेशः परिच्छदो येन तादृशः
प्रीणयन्, गीतादिभिः सन्तोषयन् इत्यर्थः। प्रमत्तम् अनवहितं, गीता
अन्यमनस्कमित्यर्थः, पानोन्मत्तमिति वा। अत्यलङ्घयम् उल्लङ्घनमकरवम्।

(ञ) प्रतिमुक्तेति।—प्रतिमुक्तः पिनद्धः, परिहित इत्यर्थः, ("आमुक्तः
पिनद्धापिनद्धवत्" इत्यमरः) पूर्ववेशः कापालिकपरिच्छदो येन
मदिति।—मम कर्मणा प्रचण्डवर्मणो हननरूपव्यापारेण, तुमुलं व्याकुलं
व्याकुले रणे" इति विश्वाकोषः) यत् राजवर्त्म राजमार्गः तेन।

(ट) प्रतिमाऽधिष्ठाने यत्र प्रतिमा अधिष्ठिता तस्मिन् स्थाने, वेदी
भावः। स्थूलेति।—स्थूलेन घनेन, प्रस्तरेण पाषाणेन, स्थगितम् आच्छादि
द्वारं बहिर्निर्गमनमुखं यस्य तादृशम्। बिलं गर्त्तम्।

(ठ) निशीथे अर्द्धरात्रे। वर्षवरेति।—वर्षवरेण "ये त्वल्पसत्त्वाः प्रथमा
स्त्रीस्वभाविनः। जात्या न दुष्टाः कार्य्येषु ते वै वर्षवराः स्मृताः" ॥ इत्युक्तलक्षणे
राजान्तःपुररक्षकेण क्लीवेनेत्यर्थः, ("षण्ढो वर्षवरस्तुल्यौ" इत्यमरः)
प्रेरितेनेति भावः, उपनीतानि उपस्थापितानि, महार्हाणि बहुमूल्यानि, रत्न
मणिमयालङ्काराः, पट्टनिवसनानि कौमवस्त्राणि च ययोः तादृशौ। आव
अहञ्च। तूष्णीं मौनम्।

देवी तु पूर्वेद्युः प्रचण्डवर्मणो अग्निसंस्कारं दत्त्वा चण्डवर्मणो तामवस्थामश्मकेन्द्रोपधिकृतामिव सन्दिश्य उत्तरेद्युः प्रत्यूषसि पौरामात्यपरिवृता अभ्येत्य भगवतीमर्चयित्वा सर्वजनसमक्षं तद्भवनं परीत्य सङ्केतानुरूपं महान्तं पटहनादम् (ड) अकारयत्। तेन च नादेनाहं दत्तसंज्ञः शिरसा एव उद्भिद्य सप्रतिमं लोहपादपीठम् (ढ) एकतो निवेश्य निरगमं, निरगमयञ्च कुमारम्। अथ यथापूर्वमर्चयित्वा देवीम् उद्घाटितकवाटः प्रत्यक्षीभूय विस्मिताः सर्वाः प्रकृतीरभ्यधां, 'देवी विन्ध्यवासिनी मन्मुखेन एवं वः (ण) समाज्ञापयति 'मया सकृपया शार्दूलरूपिणा तिरस्कृत्य रक्षितोऽयं बालोऽद्य दत्तः। अद्य प्रभृति मत्पुत्रतया अयं परिगृह्यताम्।' माञ्च अस्य रक्षितारं मन्यध्वं, रक्षणवेतनञ्च अस्य स्वसा (त) मञ्जुवादिनी' इति।

श्रुत्वैतत् 'अहो !! भाग्यवान् भोजवंशः, यस्य त्वं देवीदत्तो नाथः' इति परां प्रीतिमन्वभवन् प्रकृतयः। सा तु मे श्वश्रूः तदहरेव परमप्रीता यथाविधि दुहितरं मह्यमदात्। आगतायाञ्च यामिन्यां सम्यगेव तद्दिनमपूरयम्। सर्वे च मां देवांशं राजपुत्रञ्च देवीपुत्रं मन्यमाना मदाज्ञां नात्यवर्त्तन्त। (थ) कुमारञ्च विधिवदुपनाय्य (द) पाठयन् नीतिशास्त्रं राजकार्य्यमन्वतिष्ठम्।

---

(ड) अग्निसंस्कारं वह्निक्रियां, दाहकार्य्यमित्यर्थः। चण्डवर्मणे प्रचण्डवर्मणः अग्रजाय। अश्मकेति।—अश्मकेन्द्रस्य वसन्तभानोः, उपधिकृतां कपटजनितां, कूटनीतिप्रयोगेण सम्पादितामित्यर्थः। सन्दिश्य दूतमुखेन वाचिकं प्रेष्य। सङ्केतानुरूपं पूर्ववर्णितेङ्गितानुगुणम्। पटहनादं ढक्काध्वनिम्।

(ढ) दत्तसंज्ञः दत्ता प्राप्ता, संज्ञा अर्थसूचना, कार्य्यसिद्धिसूचकेङ्गित इति यावत् येन तादृशः। ("संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना" इत्यमरः)। सप्रतिमं देवीप्रतिमासहितम्। लोहपादपीठं लौहनिर्म्मितचरणस्थापनासनम्।

(ण) प्रकृतीः पौरामात्यान्। एवं वक्ष्यमाणप्रकारम्। वः युष्मान्।

(त) अस्य बालस्य। स्वसा भगिनी।

(थ) अत्यवर्त्तन्त अत्यक्रामन्, लङ्घितवन्त इत्यर्थः।

(द) उपनाय्य उपनयनसंस्कारेण संस्कार्य्य।

अथ क्रमेण मित्रवर्ममन्त्रिणमार्य्यकेतुं नाम कौशलाभिजनत्वात् कुमारमातृपचं मन्त्रिगुणोपेतं नालीजङ्घेन परीक्ष्य सहायं कृत्वा सत्यशौचयुक्तान् अमात्यान् विविधव्यञ्जनांश्च गूढ़पुरुषान् नियोजयन् स्व-परराष्ट्रेषु विविधेन कौशलेन उपायान् (ध) प्रयुञ्जन् अतिष्ठं, व्यचिन्तयञ्च, 'सर्वोऽपि अतिशूरः सेवकवर्गो मयि तथाऽनुरक्तो यथा आज्ञया जीवितमपि तृणाय मन्यते। राज्यद्वितयसैन्यसामग्र्या च न अश्मकेन्द्रात् वसन्तभानोर्न्यूनो नीत्याविष्टश्च। (न) अतस्तं पराजित्य विदर्भपतेरनन्तवर्मणस्तनयं भास्करवर्माणं पितुः पदे स्थापयितुमलम् (प) अस्मि। अयञ्च राजसूनुः 'भवान्याः पुत्रः अहञ्च तत्साहाय्ये नियुक्तः' इति सर्वत्र किंवदन्ती। (फ) इदञ्च मत्कपटं न केनापि विदितम्। अतस्त्वाश्च अस्मिन् भास्करवर्मणि 'अयमस्मत्स्वामिनोऽनन्तवर्मणः पुत्रो भवान्याः प्रसादात् एतद्राज्यमवाप्स्यति' इति बह्वाशा वर्त्तन्ते। अश्मकेन्द्रबलञ्च राजपुत्रस्य भवानीपुत्रत्वं विदित्वा 'दैवशक्तेः पुरो न बलवती मानवी शक्तिः' इति अस्माभिर्विग्रहे चलचित्तम् (ब) इवोपलक्ष्यते। मौलाः प्रकृतयश्च स्वत एव (भ) राजसुताभ्युदयकाङ्क्षिण्यः, मया पुनर्दानमानादिना विश्वासिता विशेषेण राजपुत्रमेवाभिकामयन्ते। अश्मकेन्द्रान्तरङ्गाश्च भृत्याः मदीयैः पुरुषैः प्रभूतां प्रीतिमुत्पाद्य मदाज्ञया रहसि इत्थमुपजप्ताः 'यूय-

(ध) कौशलाभिजनत्वात् कोशलाः कोशलजनपदाः, अभिजनः जन्मभूमिः यस्य तस्य भावस्तत्त्वात् कोशलदेशोत्पन्नत्वात्, ("कुलेऽप्यभिजनो जन्मभूम्यामपि" इत्यमरः)। कुमारमातृपचम् आर्य्यकेतोः कुमारमातृपचत्वञ्च कुमारमातुः वसुन्धरायाः कोशलेन्द्रदुहितृत्वात् इति भावः। सत्यशौचयुक्तान् सत्यपरान् निर्दोषांश्च। विविधव्यञ्जनान् नानाविधलिङ्गधरान्, बहुप्रकारच्छद्मवेशधारणनिपुणानित्यर्थः। गूढ़पुरुषान् चरान्। उपायान् भेददण्डसामदानानि, ("भेदो दण्डः साम दानमित्युपायचतुष्टयम्" इत्यमरः)।

(न) राज्येति।—राज्यद्वितयस्य मित्रवर्म-प्रचण्डवर्मणोः राष्ट्रद्वयस्य, सैन्यसामग्र्या बलसमूहेन। नीत्याविष्टः नीतिज्ञ इत्यर्थः।

(प) अलं समर्थः। (फ) किंवदन्ती जनश्रुतिः।

(ब) पुरः अग्रे। विग्रहे युद्धे। चलचित्तं चञ्चलमनः, सन्दिग्धहृदयमित्यर्थः।

(भ) मौलाः कुलक्रमागताः। स्वत एव स्वभावत एव, केनापि अप्रणोदिता एव इत्यर्थः।

मस्मन्मित्राणि, मित्राणाञ्च शुभोदर्कं (म) वचो वच्म्येव। ये भवानीवरपुत्रं त्यक्त्वा वसन्तभानोः पक्षीया योत्स्यन्ति तेषां नियतम् (य) अन्तकभवन-गमनम्। तत् यदि सपरिजनाः सुखेन स्थातुमिच्छथ तदा अनन्तवर्मतनयं भास्करवर्माणमनुसरथ।' (र) इति आकर्ण्य बहवोऽश्मकेन्द्रभृत्या मद्वशे एवावर्त्तन्त।

अथाश्मकेन्द्रोऽपि अचिन्तयत, 'राजसूनोर्मौलाः प्रजाः सर्वा एव एनमेव प्रभुमभिलषन्ति, मदीयश्च आभ्यन्तरो भृत्यवर्गः भिन्नमना इव लक्ष्यते। यदि अहमुपेक्षमाणस्तिष्ठामि तत उत्पन्नोपजापं (ल) स्वराज्य-मपि नालं रक्षितुम्। अतोऽविलम्बमेव अभिन्नमनोभिः कतिपयैर्बलैः समेतः विग्रहं रचयामि' इति कृतमतिः मृत्युमुखमिव मत्सैन्य-मभ्ययात्। (व) तमभ्यायान्तमालोक्य राजपुत्रेण सार्द्धं तुरगाधिरूढोऽभ्य-सरम्। तावत् सर्वा एव तत्सेनाः 'यदयमेतावतोऽपरिमितस्य अस्म-त्सैन्यस्य उपरि एक एव अभ्यागच्छति तदत्र भवानीवर एव असाधारणो हेतुः' इति निश्चित्य आलेख्यलिखिता (श) इव अवस्थिताः।

ततो मयाऽभिगम्य सङ्गराय समाहूतो वसन्तभानुः समेत्य मामसिप्रहारेण दृढमभ्यहन्। (ष) अहञ्च शिक्षाबलेन विफलिततत्प्रहारः प्रतिप्रहारेण तं विनाश्य तच्छिरोऽवनौ विनिपात्य सैनिकान् सर्वान् अवदम्, 'अतःपरमपि ये युयुत्सवः, ते समेत्य मया सह युध्यन्ताम्;

---

(म) मदीयैः पुरुषैः मन्त्रियुक्तचारैः। उपजप्ताः भेदिताः। शुभोदर्कं कल्याणो-त्तरफलम्. ("उदर्कः फलमुत्तरम्" इत्यमरः)।

(य) नियतं निश्चितम्। (र) सपरिजनाः सपरिवाराः, पुत्रकलत्रभृत्यादि-सहिता इत्यर्थः। अनुसरथ अनुगच्छथ, आश्रयथ इत्यर्थः।

(ल) उपेक्षमाणः उदासीन इत्यर्थः। उत्पन्नोपजापं सञ्जातभेदम्।

(व) अभिन्नमनोभिः एकचित्तैः, प्रभुभिरनुपजप्तैरिति भावः। अभ्ययात् अभ्य-गच्छत, आक्रामदित्यर्थः।

(श) असाधारणः असामान्यः, महानित्यर्थः। तत्सेनाः वसन्तभानोर्बलानि; आलेख्यलिखिताः चित्रार्पिताः, निश्चेष्टा इति यावत्।

(ष) सङ्गराय युद्धाय। अभ्यहन् प्राहरत्।

णो चेत् राजतनयचरणशरणा (स) भवन्तु ।' मद्वचनमाकर्ण्य सर्वेऽपि अश्मकेन्द्रसेवकाः स्वस्ववाहनेभ्यः समवतीर्य्य राजसूनुमानम्य तदग्रवर्त्तिनोऽभवन् । ततोऽहम् अश्मकराज्यं राजसूनुसात् विधाय तद्रक्षणार्थं मौलान् स्थानाधिकारिणो नियुज्य आत्मीभूतेन तत्सैन्येन साकं विदर्भान् अभ्येत्य राजधान्यां तं (ङ) पितुः पदे न्यविशयम् ।

अथ एकदा माता सद्भावस्थितं तं राजानं व्यजिज्ञपं, 'मया एकस्य कार्य्यस्य आरम्भश्चिकीर्षितः, (क) स यावन्न सिध्यति तावन्मया न कुत्रापि अवस्थातुं शक्यते; अत इयं मञ्जार्य्या त्वद्भगिनी मञ्जुवादिनी कियन्त्यहानि त्वदन्तिकमेव तिष्ठतु; अहं यावदिष्टजनोपलम्भं भुवं विभ्रम्य तमासाद्य पुनरत्र समेष्यामि ।' (ख) इत्याकर्ण्य मात्राऽनुमतेन राज्ञा अभिहितम्, 'आर्य्ये ! अस्माकमेतद्राज्योपलम्भस्य असाधारणो हेतुर्भवान्, भवन्तं विना क्षणमपि मया राज्यधूरियं न निर्वाह्या, (ग) तत् किमेवं ब्रवीति भवान् ?' इति। मया उक्तं, 'त्वया न अत्र किमपि चिन्तनीयं, योऽयं ते सचिवरत्नम् (घ) आर्य्यकेतुरस्ति, स ईदृशानां बहूनां राज्यानां धुरं बोढुमलम्, अतस्तमत्र नियुज्य गमिष्यामि ।' इत्येवमाश्वासितोऽपि समाटकोऽसौ विविधैराग्रहैः कियन्तं कालं

---

(स) शिक्षाबलेन अस्त्रविद्यानैपुण्येन । विफलिततत्प्रहारः व्यर्थीकृतवसन्तभानुकृताघातः । युयुत्सवः योद्धुमिच्छवः । राजेति ।—राजतनयस्य भास्करवर्मणः, चरणौ पादौ, शरणम् आश्रयो येषां तथाभूताः राजपुत्रस्य शरणागताः ।

(ङ) राजसूनुसात् राजकुमारायत्तं, भास्करवर्माधीनमित्यर्थः । तत्सैन्येन अश्मकेन्द्रबलेन । साकं सह । तं भास्करवर्माणम् ।

(क) चिकीर्षितः कर्त्तुमिष्टः ।

(ख) यावदिति ।—इष्टजनस्य प्रियजनस्य, उपलम्भं प्राप्तिं, यावत् । तम् इष्टजनम् । आसाद्य प्राप्य, गृहीत्वा वा । समेष्यामि समागमिष्यामि ।

(ग) राज्यधूः राज्यभारम् । निर्वाह्या बोढुं शक्या, परिचालयितुं समर्था इत्यर्थः ।

(घ) सचिवरत्नं सचिवेषु रत्नतुल्यम्, अमात्यश्रेष्ठमित्यर्थः, "जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते" इति स्मरणात् ।

र्मा प्रयाणोपक्रमात् (ङ) न्यवर्त्तयत्, प्रादाच्च उत्कलाधिपतेः प्रचण्डवर्मणो राज्यं मह्यम् । अहञ्च तद्राज्यं स्वायत्तं कृत्वा राजानमामन्त्र्य यावत् भवदन्वेषणार्थं व्रजामि तावत् अङ्गनाथेन सिंहवर्मणा स्वसाहाय्याय आकारितोऽत्र समागतः पूर्वपुण्यपरिपाकात् स्वामिना समगंसि ।" (च)

इत्याकर्ण्य सम्प्रहृष्टाः सर्वे कुमाराः पाटल्यां यौवराज्यमुपभुञ्जानं पूर्वसङ्केतितं सभार्य्यं सोमदत्तमानाय्य यावत् परस्परमानन्दमनुभवन्ति तावत् पुष्पपुराद्राज्ञः पत्रमादाय राजहंसस्य समागता राजपुरुषाः प्रणम्य राजवाहनं व्यजिज्ञपन्, "कुमार ! देवस्य पितुस्ते आज्ञापत्रं (छ) गृह्यताम् ।" इत्याकर्ण्य सादरं तत् गृहीत्वा राजवाहनः सर्वेषां शृण्वतां तदवाचयत् । (ज)—

"स्वस्ति श्रीराजहंसभूपतिः पुष्पपुरात् चम्पामधिवसतो राजवाहन-प्रमुखानाशास्य निगदति यथा, यूयमितो मामामन्त्र्य प्रस्थिताः पथि कस्मिंश्चित् वनोद्देशे उपशिवालयं स्कन्धावारं (झ) निधाय स्थिताः । तत्र राजवाहनं निशि शिवालये शिवपूजार्थं स्थितं प्रातरनुपलभ्य अवशिष्टाः सर्वेऽपि कुमाराः 'सह एव राजवाहनेन राजहंसं प्रणंस्यामो न चेत् प्राणांस्त्यक्ष्यामः' इति प्रतिज्ञाय सैन्यं परावर्त्त्य (ञ) राजवाहनमन्वेष्टुं पृथक् प्रस्थिताः । एवं भवद्वृत्तान्तमाकर्ण्य सैनिकेभ्यः असह्यशोकसागरे निमग्नोऽहं 'वामदेवाश्रमं गत्वा तन्निदितं कृत्वैतं वृत्तान्तं प्राणांस्त्यक्ष्यामि' इति निश्चित्य तदाश्रमगतस्तं मुनिं

(ङ) प्रयाणोपक्रमात् प्रस्थानारम्भात्, त्वदन्वेषणार्थं प्रस्थानोद्योगादित्यर्थः ।

(च) आमन्त्र्य सम्भाष्य । आकारितः आहूतः, ("हूतिराकारणाऽऽह्वानम्" इत्यमरः) । पूर्वपुण्यपरिपाकात् प्राक्तनसुकृतस्य परिणामात्, पूर्वजन्मानुष्ठित-पुण्यकर्मणः फलप्रदानकालोपस्थितेरित्यर्थः । स्वामिना प्रभुणा, त्वयेति शेषः । समगंसि सम्मिलितोऽभूवम् ।

(छ) आज्ञापत्रम् आदेशलिपिम् । (ज) अवाचयत् अपाठयत् ।

(झ) आशास्य आशीर्वचनैरभिनन्द्य इत्यर्थः । निगदति विज्ञापयतीत्यर्थः । उप-शिवालयं शिवमन्दिरसमीपे । स्कन्धावारं सैन्यकटकं, वस्त्रावासं वा ।

(ञ) परावर्त्त्य प्रत्यावर्त्त्य, राजधान्यां प्रत्यावर्त्तितुमनुमतिं दत्त्वा इत्यर्थः ।

प्रणम्य यावत् तिष्ठामि, तावदसौ त्रिकालवेदी (ट) विदितास्मदभिप्रायः सादरमवादीत्, 'राजन्! विदितं ते समीहितम्, एते हि त्वत्कुमाराः राजवाहननिमित्तं कियन्तं कालमापदमासाद्य भाग्योदयात् असाधारणविक्रमकौशलाभ्यां विहितदिग्विजयाः प्रभूतानि राज्यानि उपार्ज्य तव पादाभिवन्दनार्थमचिरेणागमिष्यन्ति, तदलं मा साहसं (ठ) कार्षीः' इति। तदाकर्ण्य तत्प्रत्ययात् धैर्य्यमालम्ब्य स्थितं मामद्य असौ मुनिराज्ञापयत्, 'राजन्! राजवाहनप्रमुखाः सर्वे कुमाराः साम्प्रतं समीहितसिद्धिलाभशोभिनश्चम्पायां समेताः, तत् प्रेष्यतामाज्ञापत्रं सेवकैः' इति अहमाज्ञापत्रमिदं भवतां प्रैषयम्; अतःपरञ्चेत् क्षणमपि विलम्बं विधास्यथ, ततो मां जननीञ्च वसुमतीं कथाऽवशेषाविव (ड) श्रोष्यथ इति।"

एवं पितुराज्ञापत्रं श्रुत्वैव सराजवाहनाः कुमाराः वशीकृतराज्यरक्षणसमर्थान् आप्तान् पुरुषान् स्थाने स्थाने नियुज्य कियता सैन्येन मार्गरक्षां विधाय पूर्ववैरिणं मालवेन्द्रं मानसारं पराजित्य तद्राज्यं वशीकृत्य चण्डवर्मणा मन्त्रिणा पूर्वं कारागृहे निक्षिप्तं पुष्पोद्भवं कुमारं सभार्य्यं मोचयित्वा स्वस्वभार्य्यासहिताः पुष्पपुरं गत्वा राजवाहनम् अवन्तिसुन्दर्य्या समेतं पुरस्कृत्य (ढ) तस्य राजहंसस्य मातुर्वसुमत्याश्च चरणान् ववन्दिरे। तौ च पुत्रसमागमेन परमानन्दमनुभवन्तौ वामदेवः समीक्ष्य सर्वान् कुमारानाज्ञापयत्, "भवन्तः सर्वेऽपि साम्प्रतं स्वानि स्वानि राज्यानि गत्वा न्यायेन परिपाल-

(ट) तद्विदितं तस्य वामदेवस्य, विदितं ज्ञातम्। त्रिकालवेदी कालत्रयवृत्तान्ताभिज्ञः।

(ठ) समीहितं चेष्टितम्, अभिप्राय इत्यर्थः। पादाभिवन्दनार्थं चरणार्चनानिमित्तम्। साहसम् आत्मविनाशादिरूपमविमृष्यकारित्वमित्यर्थः।

(ड) तत्प्रत्ययात् तस्य मुनेर्वाक्ये, तस्मिन् मुनौ इति वा, प्रत्ययात् विश्वासात्। समीहितेति।—समीहितस्य चेष्टितस्य, दिग्विजयरूपस्य अभिप्रेतार्थस्येत्यर्थः, सिद्धिलाभेन साफल्योपलब्ध्या, शोभन्ते भासन्ते इति तादृशाः। प्रैषयं प्रेरयं, प्रेरितवानस्मि इत्यर्थः। कथाऽवशेषौ नाममात्रावशिष्टौ, मृतौ इत्यर्थः।

(ढ) आप्तान् विश्वस्तान्। पुरस्कृत्य अग्रेकृत्य।

यन्तु, यदा च इच्छा पुनर्भवति तदा पित्रोश्चरणाभिवन्दनाय आगन्तव्यम्।" ततस्ते सर्वेऽपि कुमारास्तन्मुनिवचनं शिरसि आदाय तं प्रणम्य पितरौ च दिग्विजयं पुनर्विधाय मुनिसन्निधौ स्थितं पितरं राजहंसमुपागमन्।

अथ राजा कुमाराणां स्वस्वचरितानि आकर्ण्य परमप्रीतो मुनिं सविनयं व्यजिज्ञपत्, "भगवन्! तव प्रसादादस्माभिर्मनुजमनोरथाधिकं (ण) सुखमधिगतम्। अतःपरं मम भवच्चरणसन्निधौ स्थित्वा आत्मसाधनमेव विधातुमुचितं, तत् पुष्पपुरराज्ये मालवराज्ये च राजवाहनमभिषिच्य अवशिष्टानि राज्यानि नवभ्यः कुमारेभ्यो यथायथं सम्प्रदाय ते च कुमारा राजवाहनवशवर्त्तिनस्तदैकमत्या समग्रां भुवमकण्टकां (त) यथा उपभुञ्जन्ति तथा विधेयं स्वामिना" इति। मुनिरवदत्, "कुमाराः! अयं वो जनकः वयःसमुचिते (थ) पथि वर्त्तमानः, अस्य महाश्रये स्थित्वा वानप्रस्थाश्रमाश्रयणं सर्वथा भवद्भिर्न निवारणीयम्। भवन्तश्च पितृसन्निधौ न सुखमवाप्स्यन्ति" (द) इति अभिधाय राज्यानि कुमारेभ्यो यथायथं विभज्य प्रादात्। ते च मुनेः पितुश्च आज्ञां शिरसा आधाय राजवाहनं पुष्पपुरे अवस्थाप्य तदनुज्ञया स्वानि स्वानि राज्यानि गत्वा न्यायेन प्रतिपालयन्तः स्वेच्छया पित्रोः सकाशे गतागतमकुर्वन्। एवमवस्थितास्ते कुमाराः सर्वमपि भूमण्डलं परस्परम् ऐकमत्येन (ध) परिपालयन्तः परमसुखेन कालमत्यवाहयन्।

इति अष्टमोच्छ्वासः।

इति तृतीयभागः समाप्तः।

(ण) मनुजमनोरथाधिकं मानुषाभिलाषातीतं, मनुष्याणां विषये आशातीतमित्यर्थः।

(त) आत्मसाधनं परमात्मचिन्तनम्। तदैकमत्या तेन राजवाहनेन सह ऐकमत्यमवलम्ब्य। अकण्टकां निःशत्रुकाम्।

(थ) वयःसमुचिते वृद्धकालोपयोगिनि।

(द) अवाप्स्यन्ति लप्स्यन्ते, अधीनत्वादिति भावः।

(ध) ऐकमत्येन एकमतावलम्बनेन।

इति तृतीयभागस्य व्याख्या समाप्ता।

